त्यर्थः । तथा च तेन कृतो निष्कामोऽपि धर्मः संभवतीति भावः । श्रवणमात्रेण नाश्रद्धामलक्षालनमित्याभ्यासेऽपयुक्त-मलक्षालनाय विवेकोऽपेक्षितः, स चोपपत्तिसाध्य इति शास्त्रपाठ आवश्यक इत्याह—न हीति । शङ्काशूकस्येति । श्रुतस्यार्थस्य नैरन्तर्येण दीर्घकालमनुसंधानं हि निदिध्यासनं, न च तत् दारादित्यागमन्तरेण संभवति तत्त्यागस्तु न श्रुत्यर्थनिश्चयं विनेत्यर्थः । एतेनेति । मिथ्याज्ञानध्वंसस्य मोक्षजनकतया तस्य च तत्त्वज्ञानादेवोत्पादेन तत्त्वज्ञानोत्पादाय प्रतिबन्धकाधर्मतिरोधानलक्षणसत्त्वशुद्धये कस्यचिदवश्यमपेक्षणीयत्वेन चेत्यर्थः । न हि मिथ्याज्ञाननाशार्थं तत्त्वज्ञानस्य कर्मापेक्षा लोके दृष्टा, नाप्यधर्मनाशकं विनाऽधर्मनाश इत्यन्यस्य नाशकस्याभावान्मोक्षजनकतया श्रुतानां निष्कामकर्मणां सत्त्वशुद्धिजनकता, ततस्तत्त्वसाक्षात्कारस्ततो मोक्ष इति तत्त्वज्ञानकर्मणोर्मोक्षं प्रति तत्त्वज्ञानस्य साक्षाज्जनकता कर्मणस्तु परम्परयेत्याशयः ।

मीमांसकास्तु ज्ञानकर्मणोर्द्वयोरपि समतया जनकत्वं ब्रुवते तदपाकरोति—न त्विति । एवं हि कर्मणो मोक्षे 12.7
जनयितव्ये व्यापारान्तरापेक्षा स्यात्, सत्त्वशुद्धये च कार- 72.7
णान्तरापेक्षा स्यात् । न हि सत्त्वशुद्धिमन्तरेण तत्त्वज्ञानमिति भावः । तत्त्वज्ञानमदृष्टद्वारा मिथ्याज्ञानं विनाश्य मोक्षसाधनमिति न कर्मणां व्यापारान्तरापेक्षा तददृष्ट एव कर्मणामपि जनकत्वादित्यपि नेत्याह—नापीति । तस्यैव तस्यापि, कर्मणोऽप्येकव्यापारकतया साक्षाज्जनकत्वमेवेत्यर्थः । न तु तस्यैव धर्मस्यैव । एवं च यस्य पूर्वं परम्परा-

जनकत्वमुक्तं तस्यात्र साक्षाज्जनकत्वं शङ्कार्थ इति । तत्र निष्कामकर्मणामुक्तेरत्र तु तथा व्याख्याने तत्त्वज्ञानजन्यस्यादृष्टस्य साक्षाज्जनकताप्राप्तेः । दृष्टेति । मोक्षार्थं न तत्त्वज्ञानेनादृष्टं जन्यते मिथ्याज्ञानध्वंसेनैवोपपत्तेः । नापि तदर्थमेव तत्त्वज्ञानस्य मिथ्याज्ञानध्वंसार्थं तदपेक्षाया अदृष्टपरत्वादित्यर्थः । विहितत्वं तु नादृष्टजनकत्वे प्रयोजकं भेषजे व्यभिचारादित्याह—अन्यथेति । तस्य प्रयोजकत्व इत्यर्थः । उपपत्तिविरोधमेव दर्शयति—काम्येति । त्यागात् मुमुक्षुणा । चतुर्थेति । संन्यासिभिर्निष्कामस्यापि काम्यस्य कर्मणोऽनाचरणादित्यर्थः । ततः चतुर्थाश्रमविधिविरोधादेव । पुत्रजन्मादौ श्राद्धादेस्तैरनाचरणादित्यर्थः । तदभाव इति । एवं गृहस्थस्य मुक्तिर्न स्यादित्यर्थः । न च तत्र मानाभाव इत्याह—यत इति । न च तत्तदाश्रमविहितकर्मणां मोक्षजनकत्वमननुगमादित्याह—न चेति । ननु कार्ये वैजात्यान्नानुगम इत्यत आह—न चेति । अभावरूपे मोक्षे कथं जातिरित्यर्थः । उपसंहरति—तस्मादिति । प्रायश्चित्तवदिति । प्रायश्चित्तेन क्वचित्तत्त्वज्ञानप्रतिबन्धकाधर्मनाशस्यापि संभवादिति भावः । पापनाशमात्रांशे वा दृष्टान्तता । लोकेति । अन्यथाऽपूर्णेनैव कर्मणा फलसिद्धिरिति शङ्कया परोऽपि पूर्णं नाचरेदिति
13.5 भावः । एतेनेति । निष्कामकर्मसाध्यस्य सुकृतस्य परम्परा-
78.1 जनकत्वबोधनेनेत्यर्थः ।

अथ शिष्याकाङ्क्षानन्तरं यत उक्तलक्षणाः शिष्या उपदुसेरतो निवृत्तिलक्षणं धर्मं व्याख्यास्यामस्तस्य लक्षणं करिष्यामः इति प्रतिज्ञा प्रथमसूत्रार्थः । अभ्युदयस्तत्त्वज्ञानं,

निःश्रेयसं मोक्षः, तयोर्यतः सिद्धिः स धर्म इति प्रतिज्ञातं
लक्षणं द्वितीयसूत्रार्थः । इदं च तदा निर्वहति यदि धर्मस्य
तत्त्वज्ञानद्वारा मोक्षजनकत्वं सिध्यति, तच्च पूर्वग्रन्थेन सिद्ध-
मिति पूर्वग्रन्थस्यैतद्व्याख्यानोपयुक्तत्वमेतेनेति ग्रन्थे-
नोक्तं युक्तम् । ननु धर्मस्य तत्त्वज्ञानजनकत्वे वेदः प्रमाणं,
तस्य कुतः प्रामाण्यमत आह—तदिति । आम्नायस्य वेदस्य
प्रामाण्यं तेन परमाप्तेनेश्वरेण वचनात्कथनात् । शब्दप्रा-
माण्य आप्तोक्तत्वं प्रयोजकं तद्वेदेऽस्त्येवेत्यर्थः । अन्ये त्व-
भ्युदयजनको भिन्नो धर्मः, निःश्रेयसजनको भिन्नः, उभय-
जनकश्च भिन्नः, तन्मत उभयजनकत्वे लक्षणे प्रत्येकजन-
केऽव्याप्तिः अभ्युदयजनकत्वे निःश्रेयसजनके निःश्रेयसजन-
कत्वेऽभ्युदयजनक इत्याह—अन्यथेति । ननु भवन्मतेऽपि
निःश्रेयसपदवैयर्थ्यं दोषोऽत आह—इत्येतावतैवेति ।
लक्षणान्तर्गतत्वेन तन्नोपादीयत एवेति भावः ।

एवमिति । इयता ग्रन्थेनेत्यर्थः । द्रव्यादयोऽभिधेया 13,11 79.6
मोक्षेण प्रयोजनेन सह कण्ठत एवोक्ताः, अभिधेयेन प्रति-
पाद्यप्रतिपादकभावः मोक्षेण प्रयोज्यप्रयोजकभावश्च संबन्धो
ग्रन्थस्य प्राप्यत एव । एवं संबन्धान्तरमप्यूह्यम् । तच्च
तत्त्वज्ञानशास्त्रयोर्व्यापारव्यापारिभावादि । प्रतिपन्नेति ।
प्रयोजनादिज्ञानं विना जिज्ञासाया असंभवादिति हृदयम् ।
कानीति । अत्र विशेषस्यानन्तत्वात् समवायस्यैकत्वात्
संख्याप्रश्नो नास्तीति भावः । इत्यादीति । अत्रादिशब्देन
पृथिव्या जलस्येत्यादि ग्राह्यम् । पदार्थमात्रधर्मापेक्षया द्र-
व्यादिधर्मो विशेषस्तदपेक्षया पृथिव्यादिधर्मः । चकारा-
विति । किञ्चेति चकारः कानि द्रव्याणीत्यादिपूर्वप्रश्नस-

मुच्चयार्थः । वैधर्म्यं चेति चकारः साधर्म्यसमुच्चयार्थ इत्यर्थः । ननु लक्षणप्रश्नः किमिति न कृत इत्यत आह-साधर्म्येति । एष्वेव लक्षणेष्वेव । तथाच लक्षणान्तर्गतसाधर्म्यादिप्रश्नेनैव लक्षणप्रश्नः कृत इति भावः । यद्वा, ननु साधर्म्यादीनां लक्षणं किमिति न पृष्टमित्यत आह—साधर्म्येति । एष्वेव द्रव्यादिष्वेव । तथाच द्रव्यत्वादिलक्षणेनैतल्लक्षणमिति भावः ।

14.9 स्फुटार्थमिति । यो विभागस्यैतावत्सामर्थ्यं न जा-
81.2 नाति तत्साधारणबोधार्थमित्यर्थः । गणनानिरपेक्षबोधा-
र्थमिति वार्थः । एवकारश्चेति । विप्रतिपत्तिनिराकरणार्थो य एवकारः सोऽपि स्फुटार्थः व्यवच्छेदपरेण विभागेनैव विप्रतिपत्तेरपि निराकरणात् । एवञ्च विप्रतिपत्तिनिराकरणार्थं एवकारश्चेति भिन्नक्रमेण समुच्चयार्थश्चकारो व्याख्येय इति भावः । सूत्रकृदुक्तं च प्रकृतं नान्यथा, स हि मुनितया सर्वत्र गृहीताप्ततत्त्वः । अन्यथा च । आद्य आह—अवगतेति । आप्तोक्ततया गृहीते वचसि अप्रामाण्यशङ्काया अभावादित्यर्थः । अन्त्ये—अनवगतेति । मुनित्वविप्रतिपत्तौ सर्वत्राप्तत्वं नाऽवधार्यतां, प्रकृते तु लोकसंवादेन नाप्रामाण्यशङ्केति भावः । लोकसंवादमेव दर्शयति—लोके चेति । किमिति । दशमद्रव्यस्य प्रतिषेधोऽशक्यः सिद्धत्वे तस्य स्वरूपापलापलक्षणनिषेधानुपपत्तेः नाप्यसिद्धस्य निषेधः प्रमितस्यैव निषेधादित्यर्थः । यथा घटे सिद्धस्य घटत्वस्य पटादौ निषेधस्तथा नवबाह्यत्वस्य रूपादौ सिद्धस्य द्रव्यसुवर्णादौ नवबाह्येऽन्धकारादौ वा निषेध इत्याह—उच्यत इति । एवं सद्भ्यामभावो निरूप्यत इत्यपरायातीत्याह—तथाचे-

ति । अतः परमिति । आधिक्यद्रव्यत्वशङ्कां विहाय न 15.8
शङ्कान्तरम्, अनाधिक्याद्रव्यत्वसाधनं विना न परिहारा- 82.3
न्तरमित्यर्थः । नन्विदमनुपपन्नं सुवर्णकरकयोः पृथिवीत्वश-
ङ्कायाः सत्त्वात् तदनुरूपस्य च परिहारस्य सत्त्वात् । नच
नवत्वापादकं शङ्कान्तरं नास्तीत्येतत्परोऽयं ग्रन्थः, एषा च
शङ्का न नवत्वापवादिका सुवर्णकरकयोः पृथिवीत्वेऽपि जलते
जोऽन्तरयोः सत्त्वेन गणनायां नवत्वाक्षतेः, मूलोक्ता च शङ्का
तथा भवत्येव सुवर्णान्धकारयोर्दशमतायां नवत्वक्षतेरिति
वाच्यम् । वायोः पृथिवीत्वशङ्काया अष्टत्वसमर्पिकाया नव-
त्वापवादिकायाः सत्त्वादिति चेन्न । भाष्यस्थो ह्येवकारो
नात्यन्तायोगव्यवच्छेदार्थः नीलं सरोजं भवत्येवेत्यत्रेव
क्रियासंगतत्वाभावात् । ततो हि सरोजे नीलत्वस्यात्य-
न्तमयोगस्य व्यवच्छेदः प्रतीयते कस्यचित्सरोजस्यानैल्येऽपि
सर्वं न तथेति प्रतीतेः । अयोगमात्रव्यवच्छेदप्रतीतौ हि
क्वचिदप्यनैल्यं न प्रतीयेत शङ्खः पाण्डर एवेत्यत्र शङ्खमात्रे-
ऽपाण्डरत्वमिव । संभवति तु विशेषणविशेष्यभावस्य काम-
चारतया द्रव्याणि कति नवैवेत्यन्वये विशेषणसंगततया
शङ्खः पाण्डर एवेत्यत्रेवायोगव्यवच्छेदार्थः, शङ्खे पाण्डरत्वा-
योगो नास्तीतिवत् द्रव्ये नवत्वायोगो नास्तीति प्रतीतेः
संभवात् । नवैव कति द्रव्याणीत्यन्वये विशेष्यसंगततया पार्थ
एव धनुर्धर इत्यत्रेवान्ययोगव्यवच्छेदार्थः पार्थातिरिक्ते
धनुर्धरत्वं नास्तीतिवन्नवातिरिक्ते द्रव्यत्वं नास्तीति प्र-
तीतेः संभवात् । अत्र च किरणावलीकृतोऽन्ययोगव्यवच्छे-
दार्थ एव 'एव'कारोऽभिमतः । अत एव नवातिरिक्ते तमसि
द्रव्यत्वमाशङ्क्य निराकृतम् । एवञ्चान्ययोगव्यवच्छेदापवा-

दिका प्रकृतेऽन्या शङ्का नास्तीत्यभिप्रायात् वायौ पृथिवीत्व-शङ्कायास्तादृशत्वाभावात् । ननु भवतु तमसि द्रव्यत्वशङ्का तादृशी, सुवर्णे त्वाधिक्यशङ्का कथं तादृशी नवान्तर्गतस्य सुवर्णस्याधिक्यशङ्कायामपि नवातिरिक्ते द्रव्यत्वस्यानाश-ङ्कितत्वादिति चेन्न । सुवर्णस्यातिरेकशङ्काया अर्थतो नवा-तिरिक्ते द्रव्यत्वशङ्कारूपत्वात् । नन्वाचार्यचरणैरयोगव्यव-च्छेदोऽर्थः किमित्युपेक्षितः ? न चैतावता न्यूनत्वव्युदासेऽ-प्याधिक्यं न निराकृतमिति वाच्यम् । दशमे द्रव्ये प्रकृत-नवत्वाभावेन तत्सत्त्वेऽयोगव्यवच्छेदस्यैवानुपपत्तेरिति चे-न्न । स्वतन्त्रेच्छत्वान्नियोगाद्यनर्हत्वात् । इदमिति । इद-मेभ्योऽधिकं द्रव्यं स्यादित्यर्थः । अत एव प्रथम इति सम-ञ्जसम् । इदमिति । इदं द्रव्यमेभ्योऽधिकं स्यादित्यर्थः । अत एव द्वितीय इति युक्तम् । किञ्च, एतच्छङ्काद्वयमपि सुवर्णा-दिकमन्धकारं चादाय मीमांसादिप्रसिद्धमेवास्ति न तु सां-प्रतं धर्म्यन्तरमादाय केनचित्कर्तुं शक्यं धर्म्यज्ञानादित्या-ह—अतः परमिति । ननु केनचित्साधर्म्येणाधिके क्वापि द्रव्यत्वशङ्का केनचिद्वैधर्म्येण च द्रव्ये क्वापि पार्थक्यशङ्का कथं न स्यादत आह—यदिति । सूत्रकारस्याप्तत्वानवधार-णदशायामाह—लोकेनेति । अत्रान्धकारस्य दशमद्रव्यत्व-

61.51 वादी शङ्कते—स्यादेतदिति । एतदग्रे वक्ष्यमाणं तमसो

4.38 द्रव्यत्वसाधकं स्यादित्यर्थः । न तावदत्र धर्मी बुद्ध्यानारूढ इत्याह—अन्धकार इति । न च द्रव्यातिरिक्ते सामान्यादा-वन्तर्भाव इत्याह—न चेति । तेषामिति । ननु तमो न सामान्याद्यात्मकं सामान्या-दीनां व्यक्त्याद्युपलम्भमन्तरेणानुपलम्भनियमादित्यत्र प-

र्वतो वह्निमान् चत्वरस्य धूमवत्त्वादित्यत्रैव व्यधिकरणासिद्धिः। न च तमो न सामान्याद्यात्मकं व्यक्त्याद्युपलम्भमन्तरेणोपलभ्यमानत्वादित्यत्र व्यतिरेकव्याप्तिप्रदर्शनपरतया मूलसंगतिः यत्सामान्यादि तद्व्यक्त्याद्युपलम्भमन्तरेण नोपलभ्यत इति साध्यहेत्वोर्व्यतिरेकनियमप्राप्तेरिति वाच्यम्। व्यञ्जकवैचित्र्येऽपीत्यस्य वैयर्थ्यापत्तेरिति चेत्। अत्र वयम्। व्यतिरेकव्याप्तौ सामान्यादित्वमस्तु व्यक्त्याद्युपलम्भमन्तरेणानुपलम्भो माऽस्तु। न हि जातिव्यक्त्योरेकमेव व्यञ्जकम् इदं रजतमिति भ्रमेण शुक्तिग्रहेऽपि शुक्तित्वाग्रहात्। नाप्याश्रयविशेषयोः शब्दे परमाणुरित्यत्राश्रयग्रहेऽपि विशेषाग्रहात्। नापि संबन्धिसमवाययोः शब्दे ध्वंसवानित्यत्र संबन्धिनो द्रव्यस्य भानेऽपि समवायाभानात्। एवं च व्यक्त्याद्योर्व्यञ्जकवैचित्र्यात्सामान्यादित्वमस्तु तथाऽनुपलम्भो माऽस्त्वित्यप्रयोजकत्वशङ्कायां व्यञ्जकवैचित्र्येऽपीत्युत्तरं, तस्यायमाशयः—एवं हि व्यक्त्याद्युपलम्भे उपलम्भनियमो माऽस्तु, तथा च यत्र यत्र सामान्यादित्वं तत्र तत्र व्यक्त्याद्युपलम्भनियतोपलम्भत्वमिति व्यतिरेकव्याप्तेरसंभवात्। व्यक्त्याद्युपलम्भनियतोपलम्भत्वाभावो हेतुर्माऽस्तु, व्यक्त्याद्युपलम्भमन्तरेणोपलभ्यमानत्वं तु भविष्यति। न हि जात्यादेरुपलम्भे व्यक्त्यादेरनुपलम्भोऽस्ति। तथा च व्यक्त्यादिग्राहकस्य जात्यादिग्राहकत्वानियमे जात्यादिग्राहकस्य व्यक्त्यादिग्राहकत्वनियमात् तथा हेत्वभावेऽपि तथा हेतुः स्यादेवेति। तथा च निरुक्ते व्यञ्जकवैचित्र्ये सत्यपि तेषां सामान्यादीनां निरुक्तनियमान्न सामान्याद्यात्मकं तम इत्यप्रयोजकतेति वदामः।

विचारस्तु बलभद्रीयां वर्द्धमानेन्दौ वा । एवञ्चात्रत्यो विचारः सर्वस्तत्रैवानुसंधेयः । यद्यपि सामान्यादिग्रहोऽपि न व्यक्त्यादिग्रहनियतः रजतमिति भ्रमे शुक्तौ रजतत्वभानेऽपि संसर्गारोपे व्यक्त्यभानात् विशेषः समवाय इत्यत्राश्रयसंबन्धिनोरभानाच्च, तथापि तमो न सामान्याद्यात्मकम् आलोकाजन्यचाक्षुषसाक्षात्कारविषयत्वादित्यत्र तात्पर्यम् । आलोकाजन्यत्वाचसाक्षात्कारविषये स्पर्शत्वे व्यभिचारवारणाय चाक्षुषेति । न च समवायादिभेदसाधने साक्षात्कारविषयत्वमेव समर्थं सामान्यभिन्नत्वे सति विशेषभिन्नत्वे सति समवायभिन्नत्वस्य साधनात् । तत्र च घटत्वादौ व्यभिचारवारणाय विशेषणोपादानादिति संक्षेपः।
व्यक्त्याद्युपलम्भमन्तरेणोपलभ्यमानत्वेऽन्वयहेतावप्रयोजक-
15.19 त्वशङ्कायामाह—उपलम्भे वेति । तत्त्वं सामान्यादित्वम् ।
83.7 निरुपाधिसहचारभङ्गप्रसङ्ग एवानुकूलस्तर्क इति भावः ।
संयोगेति । अत्र हेतुद्वयमन्यथा वैयर्थ्यात् । असिद्धिं परिहरति—न हीति । अप्रयोजकतामपाकरोति—अतथेति । अतथाभूतस्य संयोगविभागयोरजनकस्य । तल्लक्षणानुपपत्तेः कर्मलक्षणानुपपत्तेः । अतत्त्वात् अकर्मत्वात् । संयोगविभागयोरसमवायिकारणं कर्मेति कर्मलक्षणरहितस्य कथं कर्मत्वमिति भावः । द्रव्येति । ननु द्रव्यपदं व्यर्थम् असमवेतत्वमात्रस्यैव गुणत्वाभावव्याप्तत्वात् अपि च द्रव्यासमवेतत्वेऽपि गुणत्वं भवत्वेवं चाप्रयोजकतेति चेन्न, एतद्स्वरसादेव द्रव्यासमवेतमित्यादिग्रन्थोत्थापनात् । एवं च तमो न गुणः असमवेतत्वात् द्रव्यान्यसमवेतत्वाद्वेत्यत्र तात्पर्यं न वैयर्थ्यम् । अत्र द्वितीयहेतौ द्रव्यान्येति पदानुपादाने

रूपादौ व्यभिचारः। न च स्वमते द्रव्यान्यसमवेतत्वमसिद्धं
हेत्वोः पराङ्गीकारे परं परं प्रति प्रयोगात्। तथा च योऽ-
न्धकारस्यासमवायवादी तं प्रति प्रथमो हेतुर्यश्च द्रव्या-
न्यसमवायवादी तं प्रति द्वितीयः। अत्राप्रयोजकत्वशङ्का-
यामाह—द्रव्यासमवेतमिति। द्रव्यासमवेतं द्वेधा—अ- 16.4
समवेतं द्रव्यान्यसमवेतं च। तत्रासमवेतं द्वेधा—सामा- 84.4
न्यवन्निःसामान्यं च। एवं च सामान्यवत्त्वे सत्यसमवेतत्व-
मस्तु अगुणत्वं माऽस्त्विति शङ्का कर्तुं न शक्यते सामान्य-
वतः स्वतन्त्रस्यासमवेतस्याकाशादिवद् द्रव्यतया गुणत्वव्या-
घातात्। निःसामान्यत्वे सत्यसमवेतत्वे च गुणत्वं वक्तुं न
शक्यते द्रव्यकर्मभिन्नत्वे सति सामान्यवान् गुण इति तल्ल-
क्षणाभावात्। द्रव्यान्यसमवेतत्वे च गुणत्वं वक्तुमशक्यं—
तद्धि न सामान्यादि तत्र समवेतपदार्थाभावात् गुणस्य सुत
रामभावात्, न गुणकर्मणी तत्र गुणस्यासमवायादिति
प्रघट्टकार्थः। ननु हेतुद्वयमप्यसिद्धं तस्य द्रव्य एव समवाया-
दिति शङ्कते—द्रव्येति। न तावद् द्रव्यसमवायो नवातिरि-
क्तद्रव्यसमवायो नवातिरिक्तद्रव्यस्यैवासिद्धेः, किन्तु प्रकृतद्र-
व्यसमवाय एव, तदपाकरोति—नेति। ननु तमो न दिगादिगुणः
दिगादीनां विशेषगुणविरहादित्यत्र व्यधिकरणासिद्धिरिति
चेन्न, तमो न दिगादिगुणस्तदसमवेतत्वादित्यनुमाने तात्प-
र्यात् तत्र हेतुसिद्धयेऽस्य ग्रन्थस्यावतारात्। तथाहि—गुणत्वा-
दिना दिगादिषु तमसो विशेषगुणतया वा समवायः स्वीक्रि-
यते सामान्यगुणतया वा? आद्य आह—तेषामिति। द्वितीय
आह—सामान्यगुणस्य चेति। आश्रयाप्रत्यक्षत्वे सामान्य-
गुणस्यासत्पक्षतया दिगादिसामान्यगुणतायामप्रत्यक्षत्व-

प्रसङ्गादित्यर्थः। बाह्येति। अन्तरिन्द्रियप्रत्यक्षे सुखादौ व्यभिचारवारणाय—बाह्येति। इदन्तेति। नन्विदमिति शब्दवाच्यत्वम् इदमिति प्रतीयमानत्वं वा इदन्तास्पदत्वम्? नोभयं सुखादौ व्यभिचारात्। इदं सुखमिति शब्दप्रत्यययोस्तत्रापि सत्त्वादिति चेन्न, अहन्त्वसामानाधिकरण्येनाप्रतीयमानत्वस्य तदर्थत्वात्। अहं सुखीतिवत् अहमन्धकारवानिति प्रतीतिप्रयोगयोरभावेन हेत्वसिद्धेरभावात्। अप्रयोजकत्वमाशङ्क्या-

16.14 ह—चाक्षुषता हीति। प्रतीताविति। ननु प्रतीतौ तमसः

90.3 प्रतीतौ तेजसो विरोधित्वादिति हेत्वर्थः, स च तेजोनिष्ठः न तु तमोनिष्ठ इति चेन्न, तेजःप्रतिबध्यसाक्षात्कारविषयत्वादित्यर्थात्। अप्रयोजकत्व आह—गुणिन इति। तत्सहचरितेति।

ननु तेजोगुणसहचरितगुणान्तरानुपलब्धेरित्यर्थः प्रतीयते तच्छब्दस्य पूर्वपरामर्शित्वात् तेजोगुणस्य च निषेध्यतया पूर्वमुक्तेः, तत्र तमसस्तेजोगुणत्ववादिमतेऽसिद्धिः तेजोगुणः स्पर्शादिस्तत्सहचरितस्य तदपेक्षया गुणान्तरस्य तमस एवोपलब्धेः। नापि तेजोगुणसहचरितं गुणान्तरं तमोऽव्यतिरिक्तमपेक्षितम्, एवं च नासिद्धिः तमोऽव्यतिरिक्तस्य तेजोगुणसहचरितस्यार्थतस्तेजोवृत्ते रूपस्पर्शादेस्तमस उपलम्भदशायामनुपलम्भादिति वाच्यम्। एवं प्रकृतानुपलब्धेः तेजोगतरूपादिवृत्तितया व्यधिकरणासिद्धेः तमसि पक्षेऽविद्यमानत्वात्। नापि स्वभिन्नतेजोगुणानुपलम्भे उपलभ्यमानत्वादित्यर्थः गच्छति चैतत्तमसि तेजोरूपाद्यनुपलम्भ एवोपलभ्यमानत्वादिति वाच्यम्। प्रभारूपोष्णस्पर्शयोर्व्यभिचारात् तत्रैकैकगुणस्य ग्रहणे द्वितीयाग्रहणे व्यभिचारादिति चेत्।

न । अत्र वयम् । तमोभिन्नतेजोगुणानुपलम्भे ऽनुपलभ्यमानत्वादित्यर्थः । न चैतद्रूपस्पर्शादावस्ति तमोभिन्नस्य तस्यैव ग्रहात् तमसि त्वस्ति तमस उपलम्भदशायां तेजसः कस्यापि गुणस्यानुपलब्धेः । तमोभिन्नत्वविशेषणानुपादाने तमस्तेजोगुणत्वादिनोऽसिद्धिः, एवं च तमो न तेजोगुणः तमोभिन्नतेजोगुणोपलम्भाभावकालीनोपलम्भविषयत्वात् । न च स्वमते तमोभिन्नत्वविशेषणवैयर्थ्यं परमतसिद्धेन हेतुना परं प्रति साधनात् । दृष्टान्तस्त्वालोकाभावः अखण्डाभावेन वैयर्थ्यमिति वा । अत्राप्रयोजकत्वशङ्कायामाह—न तावदिति । हेतुरस्तु साध्यं माऽस्त्वित्युक्तादितमसस्तेजोगुणत्वस्वीकारो न रूपपर्यवसन्नः तद्रूपस्य शुक्लभास्वरत्वादित्यर्थः । ननु तमसो नैल्यमौपाधिकमिति शङ्कते—इन्द्रनीलेति । आश्रयरूपगतधर्मस्य तमसि भानेऽतिप्रसङ्ग इत्याह—शैलेति । नापि स स्वीकारस्तेजोगुणान्तरपर्यवसन्न इत्याह—तस्मादिति । इति वदामः ।

आलोकेति । चक्षुःपदानुपादाने स्पर्शे व्यभिचारः, 17.1
आलोकनिरपेक्षेत्यनुपादा रूपादावित्यर्थः । नन्वप्रयो- 92.4
जकत्वं पृथिवीरूपस्याप्यालोकं विनाऽऽरोपरूपचाक्षुषत्वसंभवात्प्रमायामेवालोकस्य कारणत्वादित्याशङ्कते—पार्थिवमिति । अन्यथा तत्रापि कथं नीलं तम इत्यारोप इति भावः । ननूक्तमेव भ्रमे नालोकापेक्षेत्यत आह—तदेव हीति । द्वेधा हि भ्रमो वाच्यः—(१) आरोप्यं नीलं रूपम् आलोकाभाव आरोपविषय इत्येकः, यथा पित्तद्रव्यगतः पीतिमाऽऽरोप्यः शङ्ख आरोपविषयः । एवं च तदेव नीलरूपमेव

धर्म्यन्तरे आलोकाभावे समारोप्यत इति फक्किकार्थः । (२)नीलसमारोपरूपविषयः आलोकाभाववृत्तित्वमारोप्यमि-ति द्वितीयः, तदाह—तत्रैवेति । तत्रैव नीलरूप एव नियतदेशे पृथिवीमात्रावृत्तावनियतदेशत्वमालोकाभाववृत्तित्वमारोप्यत इति फक्किकार्थः । नेदीयसीति । चक्षुषो निकटदेशवर्तिन्यणीयसि अणुनि मशकादौ यथा महत्त्वमारोप्यत इत्यर्थः । एवं च नीलं तम इति भ्रमो नीलप्रमां विना पक्षद्वयेऽप्यनुपपन्नः—प्रथमपक्षे आरोप्यज्ञानतया चरमे आरोपविषयज्ञानतया तस्या अपेक्षणादित्यर्थमाह—उभयथाऽपीति । न चालोकं विना नीलरूपप्रमाऽपीत्याह—न चेति । भ्रमे माऽस्त्वपेक्षा तत्पूर्वप्रमायां तु स्यादेवालोकापेक्षेति भावः। सा चावश्यमपेक्षतेत्याह—न चेति । ननु भवतु आरो-

17.7 प्यादिप्रमा कारणं सा चेन्द्रियान्तराद्भविष्यतीति नालो-

94.3 कापेक्षेत्यत आह—न चेति । उभयोरारोप्यारोपविषययोः अन्यतरस्मिन् भ्रमद्वयेऽप्येकस्मिन् रूपेऽव्यापृतस्य चक्षुषो न ज्ञानजनकत्वमित्यर्थः । अत्र हि भ्रमद्वयेऽपि रूपस्यानुभवोऽपेक्षितः स च नेन्द्रियान्तरादिति भावः । ननु चाक्षुषे भ्रमे चक्षुषारोप्यज्ञानमपेक्षितम्, अयं तु न तादृश इत्यत आह—न चेति । न हि बाह्येन्द्रियान्तरजन्मायं भ्रमः संभवति प्रभादिसाधारणालोकाभावरूपविशेष्ये त्वगादेरसामर्थ्यात् । प्रतियोगिन्यो वा सामर्थ्यात् । नापि नीलं रूपमेव विशेष्यं तत्र सुतरामसामर्थ्यादिति भावः । ननु न मानसे भ्रमे विशेष्ययोग्यतापेक्षिता तत्र तस्याप्युपनीतस्य भानादिति शङ्कते—स्वप्नेति । चक्षुषा नीलरूपानुभवे सति नीलं मत

इत्यारोपस्य विषयो नीलं रूपं न तम इति सर्वाशयः ।
एतेन कथं पार्थिवनित्यादिग्रन्थोत्थानम् आरोपेऽपि पूर्वो-
क्तहेतोः सत्त्वादिति निरस्तम् अप्रयोजकत्वशङ्कापरत्वात् ।
अचाक्षुषेत्यत्रालोकं विनेति पूरणीयम्, अत एवाह—आलो- 17.16 16.1
केति । अपि च रूपवद्द्रव्यं द्विविधं—एकं, न विद्यते द्रव्यं
समवायिकारणं यस्य तद्द्रव्यं निरवयवमिति यावत् यथा प-
रमाणुः । द्वितीयम्, अनेकं द्रव्यं समवायिकारणं यस्य तदने-
कद्रव्यं सावयवमिति यावत् यथा घटादिः । तत्र प्रथमं पक्षं
दूषयति—न चेति । रूपवद्यत्तन्मूर्तिमत् यच्च मूर्तत्वे सति
निरवयवं तत्परमाणुरूपम्, एवं च तमसो रूपवत्त्वे मूर्तत्वा-
पत्तौ निरवयवत्वे सति मूर्तत्वे परमाणुत्वापत्तावतीन्द्रि-
यत्वापत्तिरिति हृदयम् । ननु रूपवत्त्वे सति निरवयवतयैव
किमिति न परमाणुत्वमुक्तमिति चेन्न । अन्यथापि प्रकार-
स्यादुष्टत्वात् । द्वितीयमपाकरोति—नापीति । तमो नारब्धं
स्पर्शरहितद्रव्यत्वात् मनोवत्, अनारब्धत्वाच्च न सावयव-
मित्यर्थः । ननु स्पर्शरहितत्वमसिद्धं रूपवत्त्वेन स्पर्शानुमानात्,
तम आरब्धं पुरुषार्थहेतुत्वात् घटवदिति प्रतिपक्षग्रस्तं वा;
न च मनसि व्यभिचारः तस्य पुरुषार्थाहेतुत्वात्, पुरुषार्थ-
हेतुत्वे घटादिवदुपलभ्यमानत्वस्य वायुवदुपलभ्यमानधर्म-
त्वस्य वा प्रयोजकत्वात्, वायोः स्पर्शस्योपलम्भात् मनसि
च तदुभयाभावात् तमसश्च चौरादिपुरुषार्थहेतुत्वमनुभव-
सिद्धमिति शङ्कते-न चेति । न तावत्प्रतिपक्षः अप्रयोजक
त्वात् उपलभ्यमानधर्मतया पुरुषार्थहेतावाकाशे व्यभिचा
राच्च, नाप्यसिद्धिः स्पर्शवत्त्वसाधकस्य रूपवत्त्वस्याभावा
दित्यभिप्रेत्याह-रूपवत्त्वस्येति । यदि तमो रूपवत् स्यात्

आलोकं विना चाक्षुषं न स्यादिति तर्के इष्टापत्तावाह—प्र-
त्यक्षत्वस्य चेति । द्रव्येति । द्रव्यादेरालोकसापेक्षचक्षुर्ग्रा-
ह्यस्यापेक्षयाऽऽलोकनिरपेक्षचक्षुर्ग्राह्यत्वस्य निष्पत्तिं ज्ञप्तिमा-
दाय वैधर्म्यस्य सत्त्वादालोकाभावस्तम इत्यर्थः । नन्व-
भावत्वेऽपि तमसः कथमालोकं विना ग्रहणम् आलोकापेक्ष-
स्यैव चक्षुषो घटाद्यभावे सामर्थ्यात्, अपि चाभावत्वे तमसः
प्रतियोगिज्ञानमधिकरणज्ञानं च विना प्रत्ययविषयता न
18.8-9 98.3 स्यात्, विधिमुखेन च प्रतीतिर्न स्यात् इति शङ्कते—सोऽपीति:
घटग्रहे आलोकापेक्षायाः सत्त्वेन भवत्वेतद्भावग्रहेऽपि तद-
पेक्षा, आलोके तु नालोकापेक्षा, तथा चालोकाभावरूपत-
मोग्रहेऽपि न तदपेक्षेत्याह—यद्ग्रह इति । योग्यानुपलब्धि-
रभावग्राहिका । अनुपलब्धौ च योग्यता न प्रतियोगिग्राह-
कसमवधानम् अन्धकारेऽपि ग्राहकस्य चक्षुषः सत्त्वेन घटा-
भावग्रहप्रसङ्गात्, नापि प्रतियोगिग्राहकसकलसमवधानं
घटाभावग्रहदशायां प्रतियोगिनस्तदिन्द्रियसंनिकर्षस्य चाभा
वात्, अपि तु प्रतियोगितद्व्याप्येतरयावत्प्रतियोगिग्राह-
कसमवधानम् । न चैतावतापि कथं संनिकर्षवारणं संनि-
कर्षस्य घटेन्द्रिययोः सत्त्वेन तत्र घटासत्त्वेन तस्य प्रतियो-
ग्यव्याप्यत्वादिति वाच्यम्, यदा संनिकर्षस्तदा प्रतियोगीति
कालिकव्याप्तेः सत्त्वात् । न च घटनाशे क्षणं संनिकर्षस्य
सत्त्वात्कथमित्थमिति वाच्यम्, स्थूलकालोपाधिमादाय
व्याप्तेः सत्त्वात् । एवं च घटाभावग्रहे योग्यतानिर्वाहार्थ-
मालोकापेक्षा, प्रकृते तु न, तस्य प्रतियोगितया तदसत्त्वेऽपि
योग्यतानिर्वाहादित्याह—एवमिति । प्रतियोगीतरसाम-
ग्रीसाकल्यं प्रकृते आलोकाभावेऽपि संभवतीति भावः ।

नन्वेकालोकग्रहेऽपरालोकस्य कारणत्वात्तस्य च तदभावग्रहे प्रतियोगीतरत्वादपेक्षा स्यादेवेत्यत आह–तदेति । एकालोकग्रहे नालोकान्तरापेक्षेत्यर्थः । भवतु वालोके आलोकापेक्षा न त्वालोकाभावे । न हि यत्किञ्चिदालोकाभावस्तमः, अपितु यावतः; न च तत्सत्त्वे यावदभाव उपपद्यत इति तुष्यत्विति न्यायेनाह–प्रत्युतेति । आलोकतदभावयोर्विरोधान्नालोकाभावग्रहे तदपेक्षेत्यर्थः । तस्मिन्निति । आलोक इत्यर्थः। प्रतियोग्यग्रहो दिवान्धकारग्रहे रात्रौ वा? नाद्य इत्याह-दिवा चेति । नान्त्य इत्याह–अन्यत्रापीति । रात्रावपीत्यर्थः । रात्रावन्धकारज्ञाने रात्रिज्ञानमावश्यकं, रात्रिज्ञाने चालोकज्ञानमावश्यकं तस्य तद्घटकत्वादिति भावः । दिवसम् आलोकम् ।

निरस्तेति । निरस्तमेतद्द्वीपवर्तिरश्मिजालं यत्र एता- 19.2
दृशः कालविशेषो रात्रिरित्यर्थः । ननु गिरिदरीविवर- 104.2
वर्तिनामकलितरात्रिदिनानां कथमोकज्ञानमत आह—गिरीति । योगासक्तानां तमोज्ञानेऽपि न प्रमाणं ? तमोज्ञानवतां तु प्रतियोगिज्ञानमपि कल्प्यमिति भावः । तृतीयशङ्कायामाह––अधिकरणमिति । छाया च तमसेऽभिप्रेत्याह—दृष्टामिति । तयोर्भूतलादिज्ञानसत्त्वादित्यर्थः । अन्धतमसमभिप्रेत्याह—अनुमितिमिति । ननूपनीतस्य विशेष्यतया कथं भानं बहिरिन्द्रिय इत्यत आह—इहेति । विशेषणतयैव भानमित्यर्थः। यदि नञ्संवलितो यः शब्दस्तत्प्रयोगजनकः प्रत्ययो विधिमुखः प्रत्ययस्तदा प्रलयादिशब्दप्रयोगजनका अपि प्रत्ययास्तथा स्युरित्याह––प्रलयेति । ननु नञर्थप्रतिपादकशब्दप्रयोगजनकत्वं तत्त्वं न तु प्रलयादि-

शब्दांस्तादृशाः एतेषां ध्वंसप्रतिपादकत्वात् ध्वंसस्य च साद्य-
19.7 105.5 भावरूपतया नञर्थगर्भत्वादत आह—नञर्थेति । साद्यभाव
इति वाक्यस्यार्थे नञर्थान्तर्भावशालिनि यथा प्रलयादिशब्द-
प्रयोगस्तथाऽऽलोकाभाववाक्यार्थे तादृशि तमःशब्दप्रयोग इत्य-
र्थः । अन्यथेति । कोपः परं तवैव नास्माकमित्यर्थः। का गतिः।
प्रमाभ्रमयोः का प्रतीतिरित्यर्थः । उत्तरम्—भ्रान्तिरिति ।
प्रमात्वे बाधकमाह—स्वाभाविक्यामिति । ननु यथा
स्वाभाविकगतिमती प्रभा मणिगत्यनुविधायिनी तथा स्या-
दत आह—प्रभातुल्यत्व इति । एवं हि छाया मूर्ता स्या-
त्, प्रभापि यन्मते तेजःस्वरूपा तन्मते मूर्तैव, तेजोरूपस्व-
रूपत्वे परं न तथा, एवं च मूर्तानां समानदेशताविरोधा-
त्सप्रभेषु रत्नेषु छाया न स्यात् । न च भिन्नभिन्नावच्छे-
देन तयोर्वृत्तावविरोधः भिन्नावच्छेदेन तेजःसत्वे छायाया
एवानुपपत्तेः, रूपत्वावान्तरजातिग्राहकतेजःसत्त्व एव छाया-
व्यवहारात् । न च दिवस इति व्यर्थम्, दिवसे आलोकसत्त्व
एव या छाया सा न स्यादित्यर्थसत्त्वात् । न चैवं छाया न
स्यादित्येवोचितं तेज इत्यादि व्यर्थमिति वाच्यम्, तत्रैव
तात्पर्यात् । छायाया आलोकाभावत्वपक्षे तु न काप्यनु-
पपत्तिः, आलोकान्तराभावस्यालोकान्तरेण सादेश्यस्या-
विरुद्धत्वात् मूर्तयोस्तु सामान्यत एव विरोधात् । एवं च
छायाया मूर्तत्वे छाया न स्यादेव ; न ह्यालोकं विना सा,
तस्यास्तत्साहचर्यनियमात् । आलोके सति तु मूर्तयोः स-
मानदेशताविरोध एवेति भावः । नन्वनभिभूतं मूर्तद्वयं नैकत्र
तिष्ठति, प्रकृते तु प्रभा छाययाभिभूतैवेत्यत आह—छाय-
येति । न स्यात् न गृह्येतेत्यर्थः । छायाभिभाव्यस्य मण्यालो-

कस्य बहलतमेन तमसा सुतरामभिभवसंभवादिति भावः। नन्वालोकान्तरेणाभिभूता प्रभा न छायास्थितिविरोधिनी-त्यत आह—आलोकान्तरेणेति। यः प्रभाभिभावकस्तेन 19,12-13 108,2
छायाभिभवस्य सुतरां संभवादिति भावः। आवरके अधि-करणे तेजःसंसर्गविरोधिनि छायादौ। अन्यदेशतेति। अ-न्यदेशता अन्यदेशे प्रतीयमानता, न तु पूर्वदेशं विहाय देशा-न्तरसत्ता, तथा सति गत्यापत्तेः। एवं च पूर्वदेशे तेजस आवरणेन पूर्वं तम उपलब्धं पश्चात्तु तत्रानावरणेन नोपल-भ्यते, देशान्तरे त्वावरणेनोपलभ्यते। एवं च यदपि गच्छति तदपि देशान्तर उपलभ्यते। तमोऽपीति। तावता गतिभ्रम इत्यर्थः।

नन्वन्यदेशे उपलभ्यमानत्वं न सादृश्यं, सादृश्यज्ञान-स्य भ्रमहेतुत्वात् उपलभ्यमानत्वपर्यन्तस्य चाज्ञानात्। अन्यदेशत्वं च तत्र नास्त्येव, न हि पूर्वदेश एव विद्यमा-नोऽन्धकारोऽग्रिमदेशे, कस्यचित्प्रागभावेन कस्यचिन्नाशेन कस्यचिदत्यन्ताभावेन हि पूर्वदेशे तमोऽव्यवहारः। न हि त एव प्रागभावादयो देशान्तरे, पूर्वप्रागभावस्य तत्र प्रतियो-ग्युत्पत्त्या नष्टत्वात् तत्र जातस्य ध्वंसस्य च तत्रैव स-त्त्वात्। समयव्यापकोऽत्यन्ताभावस्तु कदाचित्पूर्वदेशे प्रतीयते कदाचित्परदेश इति तस्य पूर्वापरदेशयोः क्रमेण सम्बन्धेऽन्यदेशता संभवति, तावन्मात्रं च न तम इति कथं संगतिरिति चेन्न। अन्यदेशत्वभ्रमेण गतिभ्रमात्। तत्र भ्रमे किं नियामकमिति चेत्, सर्वत्र भ्रमे सादृश्यस्या-निबन्धनत्वात्। वस्तुतस्तु व्यक्तौ न गतिप्रत्ययः पूर्वदेशभाततमसो देशान्तरेऽप्रतीतेः, किन्तु तमोजातीये

तत्र चान्यदेशताऽस्त्येवेति न कोऽपि दोष इति दिक्।

19.17 110.5 अन्यदिति। भावधर्माध्यारोपे नारोपविषयस्य भावत्वं प्रयोजकमित्यर्थः। भारापगमदशायां जाते भारदुःखापगमे सुखत्वं यथारोप्यते तथा प्रकृतेऽपीत्याह—दृष्टश्चेति। संयोगध्वंसे यथा विभागत्वारोप इत्यर्थः। एतेनेति। तदारोपेऽपि न भावत्वं प्रयोजकमित्यर्थः। नीलिमारोपे सादृश्यमाह—शुक्लेति। नीलीद्रव्यमपि शुक्लभास्वररूपरहितं तमोऽपीत्येतावता साधर्म्येण नैल्यारोप इत्यर्थः। न चेति। एतत्सादृश्यं रक्तेनापि संभवतीति तदारोपोऽपि स्यादित्यर्थः। यत्किञ्चित्कारणसत्त्वं न कार्ये प्रयोजकमित्याह—आरोप इति। यत्रारोपस्तत्र तन्निर्वाहाय सामग्री कल्प्या, न तु सामग्र्येकदेशेनारोप आपादयितुं शक्यत इत्यर्थः। ननु किं विलम्बः प्रकृत इत्याह—अदृष्टादिकमिति। एवं च नैल्यारोपजनकादृष्टसत्त्वेऽस्तु तदारोपः, न रक्तत्वस्येत्यर्थः। आदिपदेन विशेषादर्शनं, तच्च प्रकृते नास्ति रक्तत्वाभावाभावस्य ग्रहादिति। नन्वालोकं विना रूपाननुभवे कथमारोप इत्यत आह—स्मर्यमाणमिति। स्मृतस्य नीलरूपस्यारोपो नानुभूतस्य, अतः सहकारिणमालोकं विना कथमनुभव इति दूषणं न भवति, यथा संयुक्तसमवायं विना रजतत्वानुभवोऽनुपपन्नो न तु स्मरणमपीत्यर्थः। एवं चारोप्यं स्मर्यमाणमेवारोपविषयः, आलोकाभावे तु नालोकापेक्षेति न दोष इत्याह—धर्मिणीति। नन्वेवमारोपितं नीलं रूपमेव तमोऽस्तु कथमालोकं विनारोप इति दोषस्य स्मर्यमाणतयैवापाकरणादिति शङ्कते—यदीति। विनिगमना एकार्थनिश्चयः। एषेति। यदि नीलगुणतमसोरभेदः स्यात्तदा

नीलिमा तम इत्याकारकोऽनुभवः स्यात्, न तु नीलगुण-
वत्तम इत्यर्थको नीलं तम इत्यनुभव इत्यर्थः । ननु नीलं तम
इत्यस्यापि नीलगुणभेद एव विषयो न नीलगुणवद्भेदः
बाधकं विना मत्वर्थकल्पनायां प्रमाणाभावात् । न च नीलपदस्य
गुणपरत्वे 'गुणे शुक्लादयः पुंसि' इत्यनेन पुंल्लिङ्गतापत्तिः,
गुणिपरत्वे तु न भवति 'गुणिलिङ्गास्तु तद्वति' इत्यभिधा-
नादिति वाच्यम् । नीलं रूपमित्यादौ व्यभिचारेण तस्यो-
त्सर्गपरत्वादित्यत आह—न चेति । यदि नीलतमसोरभेदः
स्यात्तदा नीलं तम इति सहप्रयोगो न स्यात्पौनरुक्त्या-
दित्यर्थः । नीलरूपस्य तमस्त्वे नीलीद्रव्यादौ तमोबुद्धि-
व्यपदेशौ स्याताम्, आरोपितस्य तस्य तथात्वे तदुपरक्त-
वस्त्रादावित्याह—नीलीति । नन्वालोकाभाव आरोपितं 20.7
नीलं रूपं तम इत्यत आह—अवश्यमिति । अयमाशयः- 112.4
यदि नीलतमःप्रत्ययौ नीलरूपगोचरावेव तदारोपरूपोऽसौ
न स्यादेव, न ह्यारोपविषयास्फुरणे भ्रान्तिसंभवः, न चात्र
नीलं तम इत्यशं विहायांशान्तरमस्ति यत्रालोकाभावभा-
नमूरीक्रियेत । तथाच तमोंऽश एव तादृश इति । अपि
च नीलं तम इत्यत्र तमोंऽश आलोकाभावविषयक
एव न नीलरूपविषयकः अबाध्यमानत्वात् नेदं नील-
मितिवन्नेदं तम इति बाधाभावादित्याह—न चेति ।
इहेतीति । यथेह रजतत्वमिति बोधे नेह रजतत्व
मिति बोधेन रजतत्वं बाध्यते न तु धर्म्यंशस्तथेहापि तमों-
ऽशस्याबाध्यमानत्वाद्धर्मिविषयकत्वमेवेत्यर्थः ।

एतेन नीलं तम इत्यस्य नीलवत्तमोवदित्यर्थ इति
निरस्तम्, तमोंऽशस्याबाधात् । तस्मादारोपविषय एवा-

न्धकारो न तथारोप्यमाण इत्युपसंहरति—तस्मादिति ।

प्रौढिर्गतिविशेषस्तद्वज्ज्ञानं प्रौढः प्रकाशः, तज्जनक-
यावत्तेजःसंसर्गाभावस्तमः, रूपत्वावान्तरजातिग्राहकतेजः-
सत्त्वे स एवच्छाया, रूपत्वग्राहकतेजःसत्त्वे रूपत्वावान्तर-
जातिग्राहकतेजोविरहोऽवतमसं, रूपत्वग्राहकतेजोविरहोऽ-
न्धतमसमिति तस्य भेदाः । आलोकज्ञानाभावस्य तमस्त्वे
चाक्षुषत्वानुपपत्तिर्दूषणम् । प्रौढप्रकाशकतेजोरूपाभाव-
स्तम इति प्रगल्भमहाचार्याः ।

इति द्रव्यनिरूपणम् ।

20.12
115.2 कण्ठोक्ता इति । असाधारणशब्देनोक्ताः, गुरुत्वादयस्तु
साधारणेन चशब्देनोक्ता इत्यर्थः । ननु सूत्रस्थस्य चशब्दो-
क्तसमुच्चयार्थत्वमेवास्तु, तथाच सप्तदशैव गुणा इत्यत आह-
अभ्युपगमेति । सूत्रे गुरुत्वादीनां गुणतया व्युत्पादनेना-
भ्युपगमसिद्धान्तसिद्धत्वं प्राप्यते, एवं चकारस्य तत्समुच्च-
यार्थत्वाभावे विभागसूत्रस्य न्यूनता स्यात्, तथाच भाष्य-
कृता सम्यगेवोक्तमिति भावः । न्यूनं स्यादिति शेषः ।
यत्तु चशब्दरहितं स्यादिति व्याख्यानं तन्न—उक्तसमुच्चया-
र्थत्वेनाप्युपपत्तेः । तथाचाभ्युपगमसिद्धान्तसिद्धानां गुणानां
चशब्देनासमुच्चये विभागसूत्रं न्यूनं स्यादित्येव व्याख्यानं
सम्यक् । विभागसूत्रं दर्शयति— रूपेति । अतश्च भाष्यो-
क्तमनुक्तसमुच्चयार्थत्वं सम्यगित्याह—अत इति । उक्त-
समुच्चयार्थत्वे न्यूनत्वापातादित्यर्थः ।

ननु चशब्देनापि भाष्यदृष्ट्या षडेव प्राप्यन्त इत्यत
आह-अदृष्टेति । ननु यथा रूपत्वेन रूपेण शुक्लादीनां संग्र-
हः, तथाऽदृष्टत्वेन धर्माधर्मयोः, अतस्त्रयोविंशतिरेव गुणाः
सन्त्वत आह-न त्विति । तत्र रूपत्वं जातिरस्ति, चक्षुर्मा

त्र्याद्यो गुणो रूपमिति लक्षणैक्यस्य ठयवस्थापकस्य सत्त्वात् एव गन्धत्वमपि जातिः, पृथिवीलक्षणस्य कारणैक्यस्य सत्त्वात्। एवं च धर्मत्वमपि जातिः, सुखलक्षणस्य कार्यैक्यस्य सत्त्वात्। अदृष्टे तु न कारणैक्यं, विहितनिषिद्धयोः क्रिययोर्भिन्नत्वात्, नापि कार्यैक्यं, सुखदुःखयोर्भिन्नत्वात्, नापि लक्षणैक्यं धर्मत्वाधर्मत्वयोर्भिन्नत्वादिति भावः। तेनेति। धर्माधर्मयोः पृथग्ग्रहणेनेत्यर्थः। ननु कथं चतुर्विंशतित्वं गुण इत्यत आह—तथाविधेति। यत्र संख्या तत्रापेक्षाबुद्धिविषयत्वं, गुणोऽपीत्यर्थः।

इति गुणनिरूपणम्।

समानानां भाव उपाधिरपीत्यत आह—स्वाभाविक 22.2
इति। समवायसम्बन्धेन विद्यमान इत्यर्थः। एवमपि बहुत्व 119.6
संख्यायां गतमत उक्तम्— अनागन्तुक इति। नित्य इत्यर्थः। नित्यमिति। अनेकवृत्ति अनेकसमवेतं, नातो घटत्वात्यन्ताभावे ऽतिप्रसक्तिः। नित्यं समवेतं जलपरमाणुरूपमपीति—अनेकेति। द्वित्वादिवारणाय-नित्यमिति। एकपदं तु द्रव्यत्वाद्येकमेवेति स्वरूपकथनायेति तत्त्वम्। भिन्नव्यक्तिस्थितयोः परावरभावः परस्परं नास्तीत्याह—एकेति। नन्वनेकसमवेतत्वगर्भं सामान्यलक्षणमेकमात्रसमवेते ऽव्याप्तमत आह—नैकेति। तादृशं सामान्यमेव नास्तीत्यर्थः। अनुगतबुद्धेस्तत्कल्पिकाया अभावादिति भावः। नन्वेकव्यक्तिगतयोर्न्यूनाधिकभावलक्षणपरापरभावेनैव स्थितिरित्युक्तं, तच्च बुद्धित्वोपलब्धित्वयोर्नास्तीत्यत आह—नापीति। तादृशि स्थल एकैव जातिः, अन्यथा पर्यायत्वभङ्गादित्यर्थः। ननु तथापि नैकव्यक्तिसमावेशे परापरभावः परस्परव्यभिचारिणोस्तथाविधयोरभावादत-

22.8 आह—न मिथ इति । जातिसांकर्यादेव तथाविधयोर्न जाति-
121.3 त्वमित्यर्थः । नन्वनेकसमवेतस्य सामान्यत्वे सामान्यत्वादि सामान्यं न स्यात् सामान्यादौ समवेतधर्माभावादत आह—नेति । सामान्ये सामान्याङ्गीकारेऽनवस्थाविशेषे निःसामान्यत्वगर्भलक्षणव्याघातः, समवाये समवायलक्षणसंबन्धाभाव इति भावः । विरुद्धं घटत्वपटत्वादिवत् । अविरुद्धमिति । एकदेशे विद्यमानं परापरभावेनैव तिष्ठतीत्यर्थः । एवं च जात्योर्विरोधितावच्छेदकं परस्परपरिहारेण विद्यमानत्वमेव, परापरभावावच्छेदकं तु सामानाधिकरण्यमेवेति लब्धम्, अत एव परस्परात्यन्ताभावसामानाधिकरण्ये सति परस्परसमानाधिकरणयोर्न जातित्वमिति जातिसाङ्कर्यस्य दूषकताबीजमप्युक्तं भवतीति भावः । नन्वयं दण्डी अयं दण्डीत्यनुगतव्यवहारो दण्डेन द्रव्येणाननुगतेनापि, रूपवानयं रूपवानयमिति तु गुणेनाननुगतेनापि, चलत्ययं चलत्ययमिति तु कर्मणाननुगतेनापि, तथा च कथमनुगतप्रत्ययानुरोधेन सामान्यसिद्धिरत आह—द्रव्येति । न हि तत्राननुगतमेव प्रत्ययकारणं येनानुगतप्रत्ययस्य सामान्यकल्पकत्वं न स्यात्, किन्तु स्वजातिभिरनुगतं, दण्डत्वादि हि तत्रानुगमकं दण्डादीनामिति हृदयम् ।

उदाहरतीति । न तु सत्तैव परं न्यूनवृत्त्यपेक्षयाऽधिकवृत्तेः सर्वस्य परत्वादित्यर्थः । परत्वमहाविषयत्वयोरैक्येन साध्याविशेषं परिहरति—व्यवहर्तव्यमिति । ननु सर्वापेक्षया महाविषयत्वं न सत्त्वेऽपि, यत्किंचिदपेक्षया महाविषयत्वं घटत्वादावपि रूपाद्यपेक्षया सत्त्वादत आह—द्रव्यत्वादिभ्य इति । जात्यपेक्षयेत्यर्थः । उदाहरणफलमाह—एवमिति ।

ननु सत्ता द्रव्यगुणकर्माणि सामान्यादिभ्यः कुतो न व्यावर्तयति ? न तावत् सामान्यादिषु विद्यमानत्वात्, सामान्यादौ सत्ताविरहात्, नापि द्रव्यादावसत्त्वात् तत्र सत्तासत्त्वात्, व्यावर्तकत्वे पक्षसत्त्वविपक्षासत्त्वयोरेव प्रयोजकत्वात्, अन्यथा द्रव्यत्वादिकमपि प्रयोजकं व्यावृत्तौ न स्यादिति शङ्कते—नन्विति । विपक्षव्यावृत्तिर्न व्यावर्त्तकत्वे प्रयोजिका किन्तु तत्राप्रतीयमानत्वं; न च सत्तासामान्यादौ न प्रतीयते । वस्तुमात्रस्य सत्ताव्यञ्जकतया सामान्यादीनामपि सत्ताव्यञ्जकत्वादित्याह—नेति । व्यक्त्यैक्यनियमः प्रत्यये । एवञ्चात्रैव सत्ता प्रतीयत इति नियमो नास्तीत्यर्थः । ननु सामान्यादेः सत्ताव्यञ्जकत्वे सत्तावत्त्वं स्यादत आह—बाधकादिति । प्रतीतिमात्रस्य वस्तुसाधकत्वेऽतिप्रसङ्ग इत्यर्थः । घटत्वादि तु न सर्वत्र प्रतीयते व्यञ्जकस्य कम्बुग्रीवादेः संस्थानस्य सर्वत्राभावात्; पृथिवीत्वादि न सर्वत्र प्रतीयते व्यञ्जकस्य गुणविशेषस्य गन्धादेः सर्वत्राभावात्; एवं कार्यादिव्यङ्ग्यमपि न सर्वत्र प्रतीयते धर्मत्वं कार्यव्यङ्ग्यसुखलक्षणस्य कार्यस्यानुगमेन कारणानुगमे कल्पनीये जातेरेव बाधकं विना कल्पनात्; गन्धत्वं कारणव्यङ्ग्यं पृथिवीलक्षणस्य कारणस्यानुगमेन सुरभ्यसुरभिगन्धयोरनुगतस्य कल्पनात् । तथाच तेषां विपक्षेऽप्रतीयमानानामस्तु व्यावर्तकत्वं न सत्ताया इत्याह—सामान्यान्तरस्य हीति । 23.16 125.5

ननु गौर्गौरित्याद्यनुगतप्रत्ययकारणत्वं गोत्वादेरस्तु तदन्वये गवि तत्प्रत्ययान्वयात् तद्व्यतिरेके ऽश्वादावभावात्, सत्ता तु न सत्सदिति प्रत्ययकारणं तद्व्यतिरेके सामान्यादौ सत्प्रत्ययसत्त्वात् । एवं च सामान्यादिसाधारणं

वस्तुस्वरूपमेव सदिति प्रत्ययकारणं न सत्तेति नानुगतप्रत्ययकारणतया सत्तासिद्धिः, व्यावर्तकत्वं तु त्वयापि नाङ्गीक्रियत इति सत्ता तदर्थं न सिध्यत्येवेति सत्तासिद्धिरेव न स्यादिति शङ्कते—तर्हीति । स्वरूपतः व्यक्तिमात्रतः । इष्टत्वादिति । सामान्यादौ सत्ताविरहेऽपि सत्प्रत्ययानुवृत्तेर्व्यक्तित इष्टत्वादित्यर्थः । अनुगतप्रत्ययकारणत्वेनावश्यं तदङ्गीकार इत्याह—नेति । सामान्यादावपि तत एवानुगतः प्रत्यय इत्याशयः । ननु यदि द्रव्यादिषु त्रिष्वेव सद्व्यवहारस्तदा विशेषा व्यक्तिविशेषा एव तन्निमित्तं, यदि च सामान्यादिष्वपि लक्षणमात्रं व्यक्तिमात्रमिति किं सत्तयेत्यत आह—नचेति । एवं ह्यननुगतेनाप्यनुगतव्यवहारस्वीकारे गवादिव्यवहारेऽपि किं गोत्वादिस्वीकारेणेत्याह—सामान्येति । ननु यत्र प्रत्यये व्यक्तिविशेषा व्यक्तिमात्रं वा न भासते तत्कारणत्वेन सामान्यस्वीकारो न त्वनुगमकत्वेनेत्यत आह—नहीति । तदुभयाविषयकः सामान्यविषयकः
24.4
127.2 प्रत्ययो नास्त्येवेत्यर्थः । एवं चानुगमकत्वेनैव गोत्वादिस्वीकारे सत्तास्वीकारोऽपीति भावः । नन्वनुगतसत्प्रत्ययकारणत्वेन सत्तास्वीकारो नोचितस्तेन विनापि सामान्यादौ सत्प्रत्ययात् । नच द्रव्यादौ विद्यमाना सत्ता सामान्यादावनुगतप्रत्ययकारणम्, असंबद्धस्यानुगमकत्वे घटत्वेन पटादौ घटाकारप्रत्ययापत्तेरिति शङ्कते—कथमिति । सत्तेति । द्रव्यादौ समवाय इव सामान्यविशेषयोरेकार्थसमवायः समवाये एकार्थवृत्तित्वं संबन्धोऽस्त्येवेति नासंबन्धमादायातिप्रसङ्ग इति भावः ।

वस्तुतस्तु सामान्याधिकरणे सत्तासमवायः सामा-

न्य इव समवायाधिकरणे सत्तासमवायः समवायेऽप्यस्तीति न सामान्यादौ संबन्धभेद इति तत्त्वम् ।

नन्वयं संबन्धो द्रव्यत्वादिनापि, तथा च सामान्यादौ तत्प्रत्ययोऽपि स्यादिति चेन्न । व्यञ्जकविरहेण विरहात् । ननु साक्षात्सबन्ध एव व्यवहारनिमित्तमत आह–गुणादि- 24.6
ष्विति । अतिप्रसङ्गं शङ्कते–अभावेऽपीति । तस्येति । सत्ता- 128·1
र्थकभावशब्देन नञा संबन्धादित्यर्थः । यदि च विरोधित्वेन न प्रतीति स्तदा तत्रापि भवत्येवाभावः सन्निति प्रत्यया-दिति भावः ।

अपरम् अपरमपीत्यर्थः । तत्र हेतुः–सत्तेति । सत्ता तु न जात्यपेक्षयाऽल्पविषयेत्यर्थः । त्वर्थ इति । एवंच सत्तान्त्य-विशेषयोर्व्यावृत्तिः । अन्त्येषु असामान्यरूपेषु । एताः संज्ञा न निष्फला इत्याह–एतादिति ।

इति सामान्यनिरूपणम् ।

भवन्त्युत्पद्यन्त इति न संभवतीत्यत आह–सन्तीति । नन्ववसाने प्रलये सन्तीत्यर्थः प्राप्यते, स च द्रव्यत्वादिसा-धारणस्तेषामपि नित्यत्वादत आह–येभ्य इति । असामान्य रूपाविशेषा इत्यर्थः । तदेव विशदयति–सामान्येति । यदपेक्षया न्यूनवृत्ति धर्मान्तरमस्ति तदपेक्षया न्यूनवृत्तिर्ध-र्मो विशेषः, न त्वेवं विशेषस्तस्यैकमात्रव्यक्तिगततया तदपेक्षया तदभावादित्यर्थः । वैशिष्ट्यमिति । सामान्यरूपा हि विशेषाः स्वन्यूनवृत्तिविशेषवन्तः, ते हि सामान्यरूपतया नेकवृत्तयस्तदपेक्षया च न्यूनवृत्तयो विशेषाः संभवन्त्येव, अन्ततस्तद्व्यक्तित्वस्य संभवात् । एते तु विशेषा एकमात्र-वृत्तयः, न च तदपेक्षया न्यूनवृत्तयः संभवन्ति । तथा चैतेषु विशेषेषु वैशिष्ट्यं समाप्यते स्वन्यूनवृत्तिविशेषान्तरशून्य-

विशेषत्वं वर्तते, एवं चावसानिकविशेषत्वं चरमविशेषत्व-मित्यर्थः ।

24 17·18 129.9 अयमर्थ इति । अयं घट इतरेभ्यो भिद्यते एतत्कपाल-समवेतत्वादित्याश्रयेण, घट इतरेभ्यो भिद्यते घटत्वादिति जात्या, सुवर्णमितरेभ्यो भिद्यते द्रवत्वविशेषवत्त्वादिति गुणेन, वायुरितरेभ्यो भिद्यते तिर्यग्गमनविशेषवत्त्वादिति कर्मणा यथा व्यावृत्तिधीः संभवति तथा परमाणुषु प्रत्येकं न संभवति । न तावदाश्रयः निराश्रयः निराश्रयत्वात् । न च संयोगसंबन्धेनाश्रयो व्यावर्तकः, तत्र परमाण्वन्तरस्या-वृत्तिसंभवात् । नापि जातिः पृथिवीत्वादीनां परमाण्वन्तरे-ऽपि वृत्तेः, एकमात्रवृत्तिजातेरभावात् । नापि गुणो गन्धा-दिस्तस्य न गन्धत्वादिना हेतुता परमाण्वन्तरसाधारणत्वा-त् । न च प्रतिगन्धादि किंचिद्वैलक्षण्यमस्ति येन तेन रूपेण हेतुता स्यात् । एवं कर्मण्यपि ज्ञातव्यम् । नन्वेतत्परमा-णुत्वादयो व्यावर्तका भविष्यन्ति किं विशेषेणेति चेन्न । अव्यावृत्तस्य धर्मस्य व्यावर्तकत्वाभावात्, तत्र व्यावर्तकान्तरा-पेक्षायामनवस्थानात् । विशेषेऽप्येष प्रसङ्ग इति चेन्न, तस्य धर्मिग्राहकमानेन स्वतो व्यावृत्तत्वेनैव सिद्धेः । एवं च नि-त्यद्रव्येषु विशेषाः सिद्धाः, तद्गुणास्तु न विशेषवन्तः आश्रयरूपेण विशेषेणैव तेषां व्यावृत्तत्वात् आश्रयस्य च विशेषवत्तया व्यावृत्तत्वेन विशेषत्वसंभवादिति भावः ।

अयमर्थ इति । नैकव्यक्तिवृत्तेः सामान्यं नानेकव्य-क्तिवृत्तेः प्रत्येकं व्यावर्तकत्वम्, एवं गुणानां सामान्यवत्त्वे समानानां गुणानां न प्रत्येकं व्यावर्तकता, निःसामान्यत्वे तु सामान्यगर्भगुणलक्षणाभावाद्गुणत्वमित्यर्थः ।

त्तस्मादिति । नित्यद्रव्येषु ये विशेषाः प्रत्येकं व्यावर्तका-स्ते विशेषा एव पदार्थान्तरभूता एव न तु सामान्यादावन्तर्भूताः, तैः प्रत्येकं व्यावृत्तेरशक्यत्वादित्यर्थः । अन्त्यव्यपदेशादिना स्वैकमात्रवृत्तिव्यावृत्तिबोधको विशेषोऽभिलक्षितः न च सामान्यादिरित्याशयः । एकेति । एकद्रव्यत्वं सामान्येऽपि अनेकद्रव्ये एकद्रव्यत्वसंभवादित्येकमात्रद्रव्यत्वं विवक्षितं, द्रव्यपदं चात्र व्यर्थम् । एवं चैकमात्रवृत्तित्वं प्राप्तम् । वृत्तिश्च समवायः, अन्यथा रूपध्वंसेऽतिव्याप्तेः । स्वरूपसत्त्वं च सत्ताजातिशून्यत्वम् अन्यथा रूपादावतिव्याप्तेस्तत्रापि स्वरूपसत्तासत्त्वात् । सत्तापदं च व्यर्थं जातिशून्यत्वेनैव रूपादिवारणात् । सामान्यादिवारणाय त्वेकमात्रसमवेतत्वमिति भावः । ननु विशेषे जात्यभावात्कथं विशेषाकारानुगतमतिः, किंच विशेषलक्षणमत आह—एवं चेति । न हि जातिरेवानुगमिका लक्षणं चेत्यर्थः ।

इति विशेषनिरूपणम् ।

नन्वयुतसिद्धत्वं यद्यभिन्नतया सिद्धत्वं तदाऽसंभवः समवायिनोर्भेदादत आह—प्राप्ता इति । नन्वेतावता नीलं 25.16
च तदुत्पलं चेत्यत्र नीलत्वे सत्युत्पलत्वमिव प्राप्तत्वे सति 133.2
सिद्धत्वं सत्त्वं प्राप्यते तच्च संयुक्तसाधारणं, सिद्धत्वं च यद्युत्पन्नत्वं गृह्यते तदा नित्ययोः संबन्धिनोरसंग्रहोऽतोऽत आह—प्राप्ता एवेति । ययोर्द्वयोर्विद्यमानयोरसंबन्धो नास्तीत्यर्थः । संयोगस्थले तु विद्यमानौ द्वावसंबद्धौ तिष्ठतः नैवं समवाये । यद्यप्येकस्य विद्यमानतादशायामसंबन्धोऽपि तिष्ठति यथा गुणानुत्पत्तिदशायां गुणिनः यथा वा गुणिनाशोत्पत्तिसमये गुणस्य तथापि समवायस्थले उभौ विद्यमानौ संबद्धावेवेति भावः । नन्वेवं पदपदार्थयोर्वाच्यवाच-

कभावे संबन्धे गतमत आह-प्राप्तिलक्षण इति । संयोग-समवायातिरिक्तश्च सम्बन्धो न प्राप्तिरित्यर्थः । तेनेति । अयुतसिद्धपदेनेत्यर्थः । संयोगे युतसिद्धत्वं दर्शयति-तस्येति । पर्यवसन्नमाह—तथा चेति । अत्र नित्यपदेन संयोगः प्राप्तिपदेन वाच्यवाचकभावो वारितस्तस्येश्वरेच्छारूपस्य नित्यत्वादिति भावः । ननु विभुद्वयसंयोगे ऽतिप्रसक्तिस्तत्रान्यतरकर्मोभयकर्मकारणाकारणसंयोगानां कारणानामसंभवेनाजत्वसत्त्वादत आह-अजेति । विभुद्वयसंयोगो नास्त्येवेत्यर्थः । लक्षणस्यैतावतैव पर्याप्तत्वे वैयर्थ्यमाशङ्क्याह-एत-

26.5-6 देवेति । स्वभावतः पूर्वोक्तया ऽयुतसिद्ध्या । आगन्तुकेनेति ।

134.3 अयुतसिद्ध्यभावेन । एतेन स्वभावत इत्यनेन यदि धर्मस्यानुत्पन्नत्वं विवक्षितम् आगन्तुकत्वं चोत्पन्नत्वं तदा समवायस्थले सर्वत्र न याति घटादिरूपादीनामुत्पादादिति निरस्तम् । ननु प्राप्तित्वं न जातिः समवाये सत्त्वात् किन्तु संयोगसमवायान्यतरत्वमिति, तथा चात्माश्रय इति चेन्न । स्वरूपातिरिक्तः संबन्धः संयोगः समवायश्च, तेन संबद्धा घटादयस्तद्भिन्नत्वं यद्यप्यभावे ऽप्यस्ति तथापि भावत्वेन तद्वारणमिति संक्षेपः ।

इहेति । नन्विह भूतले ऽभाव इत्यत्र संबन्धान्तरमस्तु, न च स्वरूपसंबन्धेन गतार्थता प्रकृते ऽपि तुल्यत्वादिति चेन्न । कारणत्रितयभेदनियामकतया समवायस्वीकारात् तत्र च प्रकारान्तराभावात् । न हि द्रव्यत्वे सति कारणं समवायिकारणं दण्डस्य घटसमवायिकारणत्वापत्तेः । नापि गुणत्वे सति कारणत्वमसमवायिकारणत्वं कर्मण्यव्याप्तेरीश्वरेच्छादावतिव्याप्तेश्चेति संक्षेपः ॥

इति समवायनिरूपणम् ।

ननु धर्मिणामुद्देशदर्शनादेव धर्मिणामुद्देशः कृत इति प्राप्तम्, एवंच धर्मप्रतिपादकग्रन्थादर्शनादेव धर्मा नोक्ता इति लब्धं, तथाचैवमित्यादिर्भाष्यग्रन्थो व्यर्थ इत्यत आह–अथेति। एवं चैतच्छङ्कानिराकरणार्थं स ग्रन्थ इति 26.11
भावः। न ह्यनुक्तेषु धर्म्यन्तरेषु सत्सु धर्मा एव परं नोद्दिष्टा 136.1
इत्यभिधानं घटत इति हृदयम्। नन्वेवं शक्त्यादयो न सन्त्येव तथाच व्यवहारविरोध इत्यत आह—शक्त्यादीनामिति। ननु धर्मैर्विनेत्यसंमतं सामान्यादिधर्माभिधानादत आह—यद्यपीति। शङ्काशूकव्यवहारलग्नं धर्माभिधानं न कृतमित्यर्थः।

यद्यपि धर्म्यभिधानादेव धर्मा अप्युक्ता एव तेषां द्रव्यादिभिन्नत्वे पदार्थान्तरत्वापत्तेः, तथाप्यस्मायं धर्म इति रीत्या नोक्तास्तथैव च तत्त्वज्ञानोपयुक्ता इत्याह–यद्यपीति। सर्वस्य द्रव्यस्येत्याद्यभिव्याप्तिबोधकत्वाच्चापि वैयर्थ्यमित्याह–अपिरिति। नन्वभावसमुच्चयबोधकत्वमेव किमिति नाङ्गीक्रियत इति चेन्न। अस्तित्वे तदसंभवात्। नन्वस्तित्वं यदि स्वरूपसत्त्वं तदाऽभावेऽपि सत्ता, जातिसत्त्वं तु सामान्यादावपि नास्तीत्यत आह—विधीति। नन्विदं यदि विद्यमानत्वेन प्रतीयमानत्वं तदाऽभावे गतं, भावत्वेन प्रतीयमानत्वमपि भ्रमसंभवात्, प्रतीयमानत्वं तु यदि भावत्वं न प्रतीतं तदा दुर्ग्रहम्, प्रतीतं चेत्तदेव लक्षणमस्तु गुर्वधिकमत आह–प्रतियोगीति। ननु प्रमेयत्वादिनाऽभावोऽपि ज्ञायमानः प्रतियोग्यनपेक्षनिरूपणः, न च सर्वदा तद्विवक्षितम् अभावाभावत्वेन ज्ञायमानस्य द्रव्यादेरपि प्रतियोगिसा-

पेक्षनिरूपणत्वादिति चेन्न । अभावाविशेष्यकज्ञानविशेष्यत्वस्य विवक्षितत्वात् । द्रव्यादिविशेष्यके ज्ञानेऽभावस्याविशेष्यत्वात् । अभावविशेष्यके नियमेन विशेषणत्वात् । नन्वभिधेयत्वं यद्यभिधीयमानत्वं तदाऽनभिधानदशायां नास्तीत्यत आह—अभिधानेति । ज्ञानविषयतामात्रं विवक्षितं, तच्चेश्वरादिज्ञानमादाय सर्वत्र सम्भवतीत्याशयः । वैधर्म्यातिप्रसक्तिर्न दोषायेत्याक्षेपसमाधानाभ्यामाह—नन्विति ।

नन्‌ नित्यद्रव्येभ्योऽन्यत्रेति व्यर्थं परमाणूनां संयोगसम्बन्धेन विद्यमानत्वात्, न चावृत्तितापक्षे आकाशादिवारणाय तत् तर्हि अन्यत्रावृत्तित्वस्य इत्युच्यतामत
27.10 139.3 आह—आश्रितत्वमिति । समवायसंबन्धेनाधेयत्वमित्यर्थः । नन्विति । तत्त्वानवस्थाभयेन स्वरूपसम्बन्धेन सत्त्वादित्यर्थः । समवायस्येति । स्वरूपसम्बन्धस्य समवायघटिततया समवायेनैव समवायस्य वृत्तिरित्यर्थः । न हि स्वातिरिक्तसमवायेन वृत्तिर्लक्षणम् अपि तु समवायेनेति भावः । निष्क्रियानिति । क्रियावति वर्तते यो द्रव्यविभाजकोपाधिः पृथिवीत्वादिस्तद्राहित्यम् । तेन निष्क्रियविनष्टे घटादौ नातिव्याप्तिरित्यर्थः ।

समवायित्वं यदि समवेतत्वं तदा नित्यद्रव्येषु नास्ति, यदि च समवेतत्वं तदा सामान्यादौ नास्तीत्यत आह—समवायेति । समवायवत्त्वं विवक्षितं, तच्चान्यत्र समवायेऽन्यसमवायवत्त्वे वाऽविशिष्टमिति भावः । नन्वनेकत्वसंख्या न गुणादावत आह—स्वरूपेति । ननु द्रव्याद्यपेक्षया स्वरूपभेदः समवायेऽप्यस्तीति चेन्न । स्वाश्रयभिन्न-

वृत्तिपदार्थविभाजकोपाधेर्विवक्षितत्वात्। भवति हि द्रव्यत्वादि तादृशम् एकद्रव्यादिभिन्ने द्रव्याद्यन्तरे सत्त्वात्। न च समवायत्वं तथा समवायभिन्ने द्रव्यादावसत्त्वात्, समवायभिन्नस्या समवायस्य चाभावादित्यर्थः । समवा- 28.2
यादिति । न च भेदसाधने साध्याविशेषः भेदस्य बहुवि- 140.2
धतया एकस्य साध्यतायामपरस्य हेतुत्वात् । निर्गुणत्वं यदि गुणाभाववत्त्वं तदान्योन्याभावमादाय द्रव्ये गतमत आह–गुणाभावेति । गुणात्यन्ताभावेत्यर्थः । स च सामान्याभावो विवक्षितः नातो विशेषाभावेन प्रसक्तिः। ननु क्रियान्योन्याभावेन प्रसक्तिरत आह–क्रियाया इति । आकाशादावतिव्याप्तिरिति चेन्न । तद्वृत्तिभावविभाजकोपाधेर्द्रव्यत्वस्य क्रियासमानाधिकरणत्वात्तद्राहित्यस्य च विवक्षितत्वात् । एकार्थसमवायः सत्तायाः सामान्यादावप्यत आह–समवायेति । ननु सामान्यविशेषवत्त्वं यद्यनुगमकव्यावर्तकधर्मवत्त्वं तदा सामान्यादौ गतं सामान्यत्वादीनां सत्त्वादत आह–द्रव्यत्वादय इति । जातिरूपतादृशधर्मवत्त्वमित्यर्थः । लक्षणं तु जातिमत्त्वमात्रं शेषवैयर्थ्यात्। निरूपपदेनेति । पदोपपदेन तु सर्वाभिधानमिति भावः। व्यवहारेति । एकेनार्थपदेन त्रितयाभिधाने लाघवं यथा संयमपदेन धारणाद्यभिधान इत्यर्थः । संयमपदेन त्रय एवोच्यन्ते, अर्थपदेन तु क्वचिदेकं क्वचित् त्रयं तात्पर्यवशादित्याह–द्रव्यादीति । तदिदमिति वैशेषिकाणां मिलितप्रत्येकप्रत्ययानुकूल एव समय इति भावः। वैयर्थ्यमाशङ्क्याह–साधर्म्येति । ननु धर्मकर्तृत्वं नाधर्मकर्तृत्वं च न धर्म इत्यत आह–अधर्ममिति । धर्ममिति

च । कर्तृत्वं च कारणत्वम् उपादानगोचरापरोक्षज्ञाना-
दिमत एव कर्तृत्वात् तस्य प्रकृते भगवत एव संभवात् ।
29 4 एतत् धर्मादिजनकत्वम् । द्रव्यादीनामिति(१) । भावना
144.1 प्रयत्नः, तदावेशस्तद्विषयत्वं, विहितः प्रयत्नो गवादिदाना-
द्यनुकूलः, निषिद्धश्चापहाराद्यनुकूलः, तद्विषयाणां हि गवा-
दीनां धर्मादिजनकत्वं, स्वरूपतो जनकत्वे सर्वदा धर्मा-
द्युत्पत्तिप्रसङ्गात् । गवादीनां विद्यमानत्वात् । एवं च गवा-
दिषु द्रव्यादिषु भवतु धर्मादिजनकत्वमुभयविधप्रयत्नवि-
षयत्वसंभवात्, न जात्यादिषु तदसंभवादित्यर्थः । ननु
जात्यादिषु कथं न भावनावेश इत्यत आह—न चेति ।
व्यापारितया भावनावेशो गङ्गाजलादौ तत्र शरीरसंयोग-
प्रभृतेर्व्यापारस्य संभवात्, जात्यादौ तु न संभवति द्रव्ये-
तरपदार्थस्य जन्यधर्मानाश्रयत्वात्, व्यापारतया तु
भावनावेशो गङ्गाजलसंयोगादौ, स च जात्यादिषु न
संभवत्येव नित्यत्वात् । एवं च स्वरूपतो भावनावेशो
द्विविधः, स जात्यादिषु बाधितः; द्रव्यादिकमन्तर्भाव्य तु
भावनावेशो भावनाविषयव्यापारव्यापार्यन्यतरवृत्तित्वं,
स न धर्मादिजनकत्वे प्रयोजक इत्यर्थः । नन्वितरभिन्नत्वेन
ज्ञातानां गवादीनां दानाद्युपयोगः तज्ज्ञानं च गोत्वादि-
वैधर्म्याधीनमिति तदुपयोग आगत इत्याह—न चेति ।
अभियोगवदिति । एतावता धर्मादिप्रयोजकत्वे सिद्धेऽपि
न जनकत्वसिद्धिर्विधिनिषेधयोरभावादिति भावः । अक्ष-
रार्थस्तु ज्ञानमात्रेण व्यावृत्तिबोधजनकत्वमात्रेण जात्या-

(१) This agrees with the text published in Benares. The Calcutta edition follows Vardhamāna who omits the word 'द्रव्यादीनाम्' ।

दीनां तदुपयोगो धर्मादिजनकत्वमिति न । गां दद्यात् न हन्यादित्यादिवत् गोत्वं दद्यात् न हन्यादिति विध्यादेरभावादिति । एतदेवोपसंहरति—तस्मादिति । अवच्छेदमात्रेण 29.8 144.7
व्यावर्तकतया । उपयुज्यन्ते प्रयोजकीभवन्ति । लक्षणं तु कारणत्वमिति भावः । ननु द्रव्यादीनां त्रयाणां प्रक्रमः कारणवतामेवेति चानुपपन्नं कार्यत्वस्य प्रागभावप्रतियोगित्वस्य ध्वंसेऽपि सत्त्वात् अनित्यत्वस्य ध्वंसप्रतियोगित्वस्य प्रागभावेऽपि सत्त्वादत आह—कार्यत्वमिति । अभूत्वा प्रागभावप्रतियोगित्वे सति भावित्वं सत्ताजातियोगित्वं भूत्वा सत्ताजातियोगित्वे सति अभावित्वं ध्वंसप्रतियोगित्वमित्यर्थः । एवं च सत्ताविरहान्न तयोरतिव्याप्तिरिति भावः । असौ च लक्षणार्थों भाष्यकृतोऽप्यभिमत इत्याह—अन्यथेति । प्रक्रमविरोधश्चेत्यपि द्रष्टव्यम् । एवकारार्थ इति । स च विवक्षां विनानुपपन्नः स्यादिति भावः ।

ज्ञातृधर्मेति । ज्ञाता आत्मा, तस्य धर्मो ज्ञानं, तदितरत् यत्कार्यं तत्कारणत्वं लक्षणमित्यर्थः । अस्या विवक्षायाः प्रयोजनमाह—अन्यथेति । अत्र ज्ञानेतरपदेनानुगतबुद्ध्यादिजनके सामान्यादावतिव्याप्तिर्वार्यते, कार्यपदेन च सत्तागर्भेण ध्वंसजनके, अलक्ष्य इत्यर्थः । ननु पारिमाण्डल्यव्यवच्छेदे कानुपपत्ति?-न हि तत् ध्वंसजनकं नित्यत्वात्, नापि ज्ञानजनकम् अतीन्द्रियत्वादिति चेन्न । प्रमेयवानिति सामान्यलक्षणाजन्ये बोधे प्रमेयसामान्यान्तर्गततया तस्यापि कारणत्वात् । प्रमेयमननुगतं न सामान्यप्रत्यासत्तिरिति चेन्न । प्रमेयत्वेनानुगतीकारात् । प्रमेयत्वमेव तत्र प्रत्यासत्तिरिति चेन्न । साक्षात्संबन्धे संभवति परम्परासंबन्धस्या-

कल्पनात् आदिपदग्राह्याणां केषाञ्चिद् व्यवच्छेदस्यानुपपन्न-
30.2-3 146.3 त्वाद्वा । अन्त्येति । अवयवरूपादेरवयविरूपादिकारणत्वा-
दित्यर्थः । द्वित्वेति । एकत्वादेर्द्वित्वादिकारणत्वादित्यर्थः ।
द्विपृथक्त्वादीत्यादिपदेन त्रिपृथक्त्वादिपरिग्रहः बहुत्वसं-
ख्याया महत्त्वकारणत्वात् । विनश्यदवस्थेति । तैर्हि
विनश्यत्तादशायामुत्पन्नैः कार्यं न जन्यतेऽग्रिमक्षणे आश्र-
याभावादित्यर्थः । अन्त्य इति । पूर्वशब्देन शब्दा-
न्तरजननादित्यर्थः । चरम इति । अत्र लिङ्गव्यत्ययेन
चरमत्वं ज्ञानविशेषणं संस्कारेण सर्वेषां ज्ञातृधर्मस्य ज्ञान-
स्यैव जननात् । चरमज्ञानेनापि संस्कारो जन्यते, स च
स्मृतिमजनयित्वैव कालान्नश्यतीति चेन्न । तस्यापि
ज्ञातृधर्मत्वात् । अत एव ज्ञानेतरेत्युपेक्षितं मूले । नन्वन्त्या-
वयविस्पर्शो जनको भवत्येव स्पर्शवद्वेगवत्संयोगस्याभिघा-
तस्पर्शवद् द्रव्यसंयोगस्य नोदनायाश्च क्रियां प्रति जनक-
त्वादिति चेन्न । स्पर्शपदस्यात्र संपातापातत्वात् ।
ननु परमाणुद्वित्वं द्व्यणुकपरिमाणकारणमिति चेन्न ।
अकारणद्वित्वस्य द्वित्वपदेन ग्रहणात् ।

ननु द्रव्याश्रितत्वं यदि द्रव्यसमवेतत्वं तदा द्रव्यत्वा-
दावतिव्याप्तिरत आह–द्रव्येति । बहुव्रीहिः । अत्र सम-
वायिकारणवत्त्वमात्रं विवक्षितं द्रव्यपदवैयर्थ्यात् । आद्येति ।
तत्र कर्मणोऽसमवायिकारणत्वादित्यर्थः । अत्र कर्मजन्यो वे-
गोऽपि त्याज्यः कारणवेगजन्यकार्यवेगस्तु संग्राह्यः वेगवता
कपालेनारब्धघटवेगे कपालवेगस्यैवासमवायिकारणत्वात् ।

स्वरूपसत्त्वस्य द्रव्यादावतिव्याप्तेराह–सत्तेति ।
प्रमाणमिति । कार्यतयेति शेषः । द्रव्यादिषु हि कार्यान्तर-
मपि प्रमाणमस्ति, इह त्वनुगतादिबुद्धिमात्रमिति भावः । बु-

द्विमात्रकार्यके ऽन्त्यावयविरूपादावतिप्रसक्तिरिति चेन्न । कार्यान्तरवद्वृत्तिभावविभाजकोपाधिशून्यत्वस्य लक्षणत्वात् । एतेन कथं बुद्धिरेवात्र मानं सामान्ये प्रत्यक्षस्यापि सत्त्वादिति निरस्तम् । अकार्यत्वं प्रागभावाप्रतियोगित्वमात्रं न तु तत्र सत्ताप्रवेशस्य कृत्यमित्याह—अकार्यत्वामिति । 30.19 149.3
अन्यथा कार्यत्वे । व्यक्तिरिति । तत्रैव समवायादित्यर्थः । तदुत्पत्तीति । अनुत्पन्नस्य समवायिकारणत्वाभावात् समवायिकारणनाशस्य च नाशकत्वादित्यर्थः । सामान्येति । एकमात्रवृत्तित्वादित्यर्थः । सर्वव्यक्तिष्वेकत्वे तु न जन्यत्वमित्याह—अभेदे त्विति । न च प्रथमव्यक्तिसमवायिकारणकमेव घटत्वं, सर्गाणामनन्तत्वेन व्यक्तौ प्राथमिकत्वासंभवात् समवायिकारणभिन्ने कार्यस्यासमवायाच्च । विशेषाणां कार्यत्वेऽनुत्पत्तिदशायां व्यावर्तकाभावे नित्यद्रव्याण्यभिन्नानि स्युरित्याह-नित्येति । ननु पूर्वमभिन्नानि विशेषोत्पत्तिदशायां भिन्नानि भविष्यन्तीत्यत आह—तथाचेति । स्वभावेति । अन्योन्याभावस्य व्याप्यवृत्तित्वपरावृत्तिः स्यादित्यर्थः । एतेनेष्टापत्तिरिति निरस्तम् । अर्वाचीनत्वात् भिन्नत्वात् । विशिष्टानि विशेषवन्ति । भवन्त्वेति । भावकार्यस्य समवायिकारणजन्यत्वनियमादित्यर्थः । ननु समवेतकार्ये तथा नियमो न तु भावकार्ये इत्यत आह—कथमिति । ननु ध्वंसवदनष्ट एव तिष्ठत्वत आह—तथाचेति । समवायिकारणस्वीकार आह—समवायेति । ननु द्वित्ववन्निमित्तकारणनाशादेव नाशोऽस्तु, ध्वंसे तु न तथा, प्रतियोग्युन्मज्जनापत्तेस्तदाह—कथं चेति । तत् संयोगलक्षणम् । ननु संयोगत्वं जातिः संयोगलक्षणमत

आह—नित्येति । समवायस्य लाघवेनैकतया नित्यसंब-
न्धित्वमुत्पन्नत्वसिद्धौ सर्वत्र तथात्वमिति भावः । आत्मेति ।
31.19 153.3 ज्ञानजनकत्वादित्यर्थः । गुणत्वेति । द्रव्यकर्मभिन्नस्य
सामान्यवतो गुणत्वनियमादित्यर्थः । विशेषान्तरेति ।
अन्यथा न भेदः स्यादित्यर्थः । अनवस्थानादिति । समवा-
यसंबन्धेनैव सामान्यस्य वृत्तेरित्यर्थः । नित्यत्वमपि
ध्वंसाप्रतियोगित्वं, न तत्र प्रतियोगिनि सत्ताप्रवेशकृत्य-
मित्याह—नित्यत्वमिति । अकार्यत्वात्, भावत्वे सती-
त्यर्थः । नातः प्रागभावे व्यभिचारः । अनित्यत्वं, भावत्वे
सति । नातः प्रागभावे व्यभिचारः । व्यापकनिवृत्त्या
व्याप्यनिवृत्तिर्भवन्ती भावत्वस्यानिवृत्तौ अनित्यत्वनिवृत्तौ
पर्यवस्यतीति भावः । अकार्यत्वमस्तु नित्यत्वं
माऽस्त्वित्यप्रयोजकतामपाकरोति—अकार्यमिति । कि-
ञ्चित् शब्दादि । सामान्याद्यभावे त्वनुगतबुद्ध्यादिर्न
स्यादिति व्याख्येयम् । तदाश्रयस्य कार्यस्याभा-
वात् । पदार्थशब्देन सामान्यादयोऽभिधीयन्त एवा-
र्थशब्देनाप्यैश्वरं संकेतमादाय वैशेषिकसंकेतमादाय
तु न तथेत्याह-स्वसमवायेति । अविशेषाणामिति ।
द्रव्यादिजातीयमनित्येऽप्यस्ति विशेषजातीयं तु न तथेत्य-
र्थः । अकर्मणामिति द्रव्यादिजातीयं नित्यमपि, कर्मजा-
तीयं तु न तथेत्यर्थः । चतुर्णामिति । द्रव्यादिजातीयम-
योगिप्रत्यक्षमपि विशेषसमवायौ तु न तथा, अतीन्द्रिय-
त्वादित्यर्थः । योगिप्रत्यक्षता तु तत्राप्यस्तीति भावः ।
एतेन परमाणुरूपादौ कथं प्रथमं साधर्म्यं कथं च घटादौ
द्वितीयं कथं च परमात्मादौ तृतीयमिति निरस्तं, तज्जा-

तीयपरतया व्याख्यानात् । असमवायिकारणत्वामिति । 32.8 155.1
इदमपि जातिनिष्ठम् । अन्त्यावयविरूपादेरसमवायिकारणत्वाभावात् । कर्मणि किमिति जातिनिष्ठत्वमिति चेन्न । विनश्यदवस्थस्यासमवायिकारणत्वाभावेन तत्राव्याप्तिवारकत्वात् । ननु यत्कर्मतो विनश्यदवस्थं तद्वारणमनभिलषितमेव, पूर्वं तेन संयोगादिजननात्, विनश्यदवस्थेन द्रव्येणोत्पन्नं तद्दशायामेव विनश्यदवस्थं वार्यत इति चेन्न । विनश्यदवस्थस्य समवायिकारणत्वाभावात् कार्यस्य क्षणिकत्वापत्तेः । यस्योत्पत्तिदशायां द्रव्यं विनश्यदवस्थं स्वयं चाग्रे तत् तद्वारणीयमिति चेन्न । तत्र द्रव्यविनश्यदवस्थत्वेनैव संयोगाद्यनुत्पत्तौ तस्याकारणत्वे प्रमाणाभावात् । पूर्वदशायां तस्याविनश्यदवस्थत्वेन कारणतायाः स्वरूपयोग्यतारूपायाः सम्भवात्केवलविनश्यदवस्थकर्मणो भावात् क्षणिकत्वापत्तेरिति चेन्न । विनश्यत्तादशायामसमवायिकारणत्वाभावेन तद्दशायामव्याप्तिवारकत्वेनासमवायिकारणवृत्तिजातिमत्त्वस्य लक्षणत्वेन विवक्षितत्वात् । असमवेतत्वामिति । अत्राभाववारणाय भावत्वं विशेषणमिति भावः । अतिव्याप्तिः पूर्ववत् । उपलक्षणेति । उपलक्ष्यते व्यज्यतेऽनेनेति व्युत्पत्त्या व्यक्तिरित्यर्थः । व्यर्थं सत् किञ्चित् ज्ञापयतीति न्यायेनास्मिन् पूर्वपक्षेऽमुं सिद्धान्तं द्योतयतीति भावः । पूर्वपक्षश्चेत्थम्—न तावद्यत्र घटस्तत्र देशे घटत्वं घटसमवायो वा नास्त्येव, तत्रैव देशे घटागमनदशायां तयोरप्रतीतिप्रसङ्गात् । न हि घटेन सह तदप्यायाति अमूर्तत्वात् । एवञ्च सर्वत्र विद्यमानौ जातितत्समवायौ यत्र यत्र व्यक्तिस्तत्र तत्र प्रतीयेते इति वाच्यं, तथाच सर्वत्र

विद्यमाने कथं व्यक्तिविशेषे प्रत्ययनियम इति । सिद्धा-
न्तस्तु—स्वभाव एव तादृशो जातेर्येन व्यक्तिविशेष एव
32.16 स्वसमवायनिरूपकत्वमिति । एतत्समवायमिति । एव
157.2 चासौ समवायश्चेत्यर्थः । द्रव्यत्वमिति । अत्र व्यतिरेके
दृष्टान्तः । गोत्वं भवतु सर्वगोसाधारणसर्वप्रमातृसाधारण-
गवाकारानुगतव्यवहारात्, द्रव्यत्वे तु न तथा अनधीतशास्त्रैः
कालदिगादिषु द्रव्यत्वस्याव्यवहारादित्यर्थः । न तावद्यदा
कदाचिदप्रतीत्या तदभावः, सास्नाद्यप्रतीतौ गोत्वाप्रतीत्या
तदभावप्रसङ्गात् । सास्नादिव्यञ्जकप्रतीतौ प्रतीतेर्न तदभाव
इति चेन्न । प्रकृतेऽपि कार्याश्रयत्वव्यञ्जकप्रतीतौ प्रतीतेरि-
त्याह—कार्याश्रयतेति । उपलक्षणमुपलक्ष्यतेऽनेनेति करण-
व्युत्पत्त्या व्यञ्जकम् । ननु मृदादिसाधारणोऽनुगतव्यवहारः
पामराणां नास्तीत्यत आह—अन्यथेति । कार्याश्रयत्वं हि
समवायिकारणत्वम् । तन्नैतद्व्यक्तित्वावच्छेदेन व्यक्त्य-
न्तरेऽभावप्रसङ्गात् । नापि व्यक्तिसत्त्वाद्यवच्छेदेन, नाति-
रिक्तेऽपि प्रसङ्गादित्यर्थः । सामान्यानियतं द्रव्यत्वानवच्छि-
न्नम् । ननु सामान्यमिव कारणत्वमपि सामान्यानवच्छिन्न-
मस्त्वत आह—कारणत्वमिति । नियतपूर्ववर्तित्वादि हि
कारणत्वादि तदननुगतस्यानुगमकं विना न स्यादित्यर्थः ।
ननूपाधिरेवानुगमकोऽस्त्वत आह—तच्चेति । ननु सर्वसा-
धारणानुगतप्रत्ययाभाव एव बाधकोऽस्तीत्यत आह—व्य-
क्तेरिति । तन्न बाधकमिति भावः । व्यक्तेरभेदोऽनेकवृत्ति-
त्वाभावात् । तुल्यत्वं पर्यायोच्छेदप्रसङ्गात् । संकरः समाना-
धिकरणयोर्व्याप्यव्यापकभावनियमात् परस्परसमानाधिकर-
णात्यन्ताभावप्रतियोगिनोर्विरोधनियमात् । अनवस्थितिः
सामान्ये । रूपहानिर्विशेषे । असंबन्धः समवाय इत्यर्थः ।

ननु भवत्विदं साधकं, प्रतीतिस्तु न, उपयुक्तेनान्यथासिद्धे-
रित्यत आह—व्यञ्जकेति । ननु सास्नाद्यनवभासेऽपि 33.9 161·3
गौरिति प्रतीतेर्न तत्रान्यथासिद्धिरत आह—न हीति । ननु
स्वात्मन्यारम्भकत्वं, तच्चात्माश्रयादसंभवीत्यत आह—स्वस-
मवायेति । इदमेव समवायिकारणत्वमित्याह—समवायीति ।

एतेन समवायिकारणं न समवायिनः कारणं दण्डदावतिव्याप्तेः, अत एव न समवायि च तत्कारणं च, नापि समवायि कारणं यस्य रूपादावतिव्याप्तेरिति निरस्तम् ।

समवाय इति । तेन न संबन्धान्तरेणातिप्रसक्तिरिति भावः । नन्वेवं द्रव्ये धर्मत्रयसत्त्वे द्रव्यपदस्य नानार्थत्वं स्यादत आह—तदेतदिति । प्रवृत्तिनिमित्तभेदे नानार्थत्वमिति भावः । अन्यतरेणापीति । गुणे तु कार्येण द्वितीयेन शब्देन प्रथमशब्दनाशः, कर्मण्यप्युत्तरदेशसंयोगेन नाश इत्यर्थः । अनित्यद्रव्येऽव्याप्तिमाशङ्क्याह—एतदिति । तत्समानाधिकरणभावविभाजकोपाधिमत्त्वमित्यर्थः । अलक्ष्यत्वमेव वा तस्येत्याह—अथवेति । भविष्यतीति । तदिहाप्यन्वितमिति भावः । अनाश्रितत्वं यदि समवायसंबन्धेनाविद्यमानत्वं तदा समवाये गतमत आह—आधारेकेति । अन्यसमवायवत्त्वे सत्यसमवेतत्वमित्यर्थः । अत्र सत्यन्तं घटादौ, विशेष्यं च समवायेऽतिप्रसक्तमिति विशिष्टमुक्तम् । नित्यान्तरेऽतिप्रसक्तेराह—द्रव्यत्वे सतीति । द्रव्यत्वे सति समवेतत्वम् अनित्यत्वं, विशेषरहितत्वं च नित्यद्रव्यातिरिक्तानां साधर्म्यमित्याह—चकारादिति । विपर्ययः पूर्वोक्तयोर्लक्षणयोः । पूर्वोक्तः स्वरूपभेदो गुणादावपीत्यत आह—बहुत्वेति । द्रव्यविभाजकोपाधिव्याप्यबहुत्वकं

स्थावत्वं विवक्षितम्, नातो दिगाकाशघटा इत्यादि
बहुत्वसंख्यामादायातिप्रसक्तिः, तस्याः कस्याऽप्युपाधेर्व्या-
प्यत्वाभावात् दिगादि विहायाकाशादौ सत्त्वात् ।
घटपटस्तम्भा इत्यादिर्बहुत्वसंख्या तु भवति पृथिवीत्वा-
दिव्याप्येत्यर्थः । द्रव्यत्वादिरप्यपरजातिर्भवतीत्यत
34.9-10 166.1 आह—पृथिवीत्वादिकेति । द्रव्यत्वापरजातिमत्त्वं लक्षण-
मित्यर्थः । संस्कारेति । पृथिव्यादिषु वेगस्थितिस्थापकौ,
जीवात्मनि भावनेत्यर्थः । मनस्यपि स्थितिस्थापक इति
कैश्चिल्लिखनात् ।

धात्वर्थ आत्मादावपीत्यत आह—स्पन्द इति । असर्व-
गतेति । अवच्छिन्नपरिमाणवत्त्वमित्यर्थः । व्याप्यव्यापकभा-
वोऽन्यत्रापीत्यत आह—गुणविशेषाविति । ननु निरन्तरो
गतिसन्तान एव वेगः, स च क्रियाकथनेनैव प्राप्त इत्यत
आह—संस्कारेति ।

निष्क्रिये सर्वत्रगतत्वं न संभवतीत्यत आह—संबन्ध इति ।
सर्वमूर्तसंयोगित्वमित्यर्थः । ननूत्कृष्टं महत्त्वं घटाद्यपेक्षं
कुसूलादावपीत्यत आह-प्रकर्षेति । ननु तादृशे परिमाणं
नास्त्येव हस्तवितस्त्यादीयत्तायाः परिमाणत्वादाकाशादौ
च तदसंभवादिति शङ्कते—नन्विति । तर्हि एको द्वावित्या-
दिरियत्ता संख्या, माषकपरिमितमित्यादिरियत्ता गुरुत्व-
मस्तु, तयोरपि गुणत्वं माऽस्त्वित्याह—संख्येति । अपि च
यदि हस्तादीयत्तैव परिमाणं तदा परमाणावपि तदभावा-
त्परिमाणं न स्यादित्याह—हस्तेति । ननु परमसूक्ष्मत्वे-
नैव तत्रेयत्तेति शङ्कते—तदभाव इति । हस्तादिकल्पना-
भाव इत्यर्थः । एतादृशीयत्ताकाशेऽपि संभवतीत्याह—तद-

भाव इति । तस्मादिति । अन्यथा संख्यादेरप्युच्छेद 35.9 167.9
इत्यर्थः । इतरेभ्यः रूपादिभ्यः । परस्परम् अखण्डमहदादिषु । हस्तादीयत्तयावच्छिद्यते परिमाणं, न तु सैव परिमाणमित्यर्थः । सर्वे संयोगिनः समाना देशा येषामिति बहुव्रीह्याश्रयणे सर्वगतत्वेन पौनरुक्त्यमत आह—सर्वेषामिति । आकाशादि वारयति—मूर्तानामिति । समानपदं व्याचष्टे—संयोगवृत्त्येति । यथा एकः संयोगेनाश्रयस्तथा परोऽपि, न तु संबन्धभेद इत्यर्थः । एवं चार्थभेदान्न पौनरुक्त्यमित्याह—पूर्वमिति । त एव मूर्ता एव । नन्वेवमाकाशादीनामवृत्तितासिद्धान्तव्याकोपः, समवायेन तत्त्वे परमाणौ प्रसक्तिरत आह—अथवेति । उपाधिरूपम् । व्यञ्जकेति । व्यक्तिमात्रस्य व्यञ्जकत्वेऽतिप्रसक्तिरित्यर्थः । बहिरिति । बहिरिन्द्रियग्राह्यजातीयविशेषगुणवत्त्वमित्यर्थः । जातीयपदान्न परमाण्वादावव्याप्तिः, विशेषपदान्नात्मादावतिव्याप्तिरित्यर्थः । तदेति । व्यञ्जकमात्रस्य जातिव्यवस्थापकत्व इत्यर्थः । इष्टापत्तिमाह—एवमिति । जातिसंकरेति । एवं च बाधकाभावसहितस्य व्यञ्जकस्य जातिव्यवस्थापकत्वमिति विनिगमनाविरहादनयोरेकस्यापि न जातित्वमित्यर्थः । ननु व्यवहारानुरोधेन जातौ बाध उपाधिरूपं सामान्यं कल्प्यते, स चेत्पृथिवीत्वादिनाऽन्यथासिद्धः किं तत्कल्पकमपीत्याह—अस्त्विति । एकेति । पृथिवीत्वादिवत्सोऽपि धर्मः क्लृप्त एव, तस्य च प्रवृत्तिनिमित्तत्वे एकार्थत्वं संभवतीति भावः । तं धर्ममाह—तस्मादिति । ननु यत्साक्षात्क्रियमाणतया भोगसाधनं स चेद्भोक्तव्यो विषयो रूपादिस्तदा परमाण्वादावव्याप्तिस्तद्रूपादेरतीन्द्रियत्वात्, तदाश्र-

यतया सिद्धत्वपर्यन्तं च व्यर्थं तदाश्रयत्वमात्रेणोपपत्ते-
रिति चेन्न । बहिरिन्द्रियग्राह्यविशेषगुणजातीयवत्त्वस्य
विवक्षितत्वात् । अत्राऽऽत्मादौ प्रसङ्गवारणाय विशेषेति ।
अत्र बाह्येन्द्रियेत्यादिना पौनरुक्त्यमिति चेन्न । तत्र परमा-
ण्वादिनाऽव्याप्तिवारणाय विशेषगुणवृत्तितया बहिरिन्द्रिय-
ग्राह्यगुणत्वापरजातिमदसमवायिकारणत्वस्य विवक्षित-
त्वात् । संस्कारत्वादयस्तु न विशेषगुणवृत्तितया बहिरि-
39.11 न्द्रियग्राह्याः । तच्चेति । कर्णशष्कुल्यनवच्छिन्नमुपादानमव-
170.6 च्छिन्नं चोपादेयमित्यर्थः । अन्यथेति । यदीत्थं नोपपा-
द्यते तदा न्यायशास्त्रे नभस इन्द्रियकारणत्वं निरुक्तं नोपप-
द्येत, यदि चेन्द्रियस्वभावत्वमेव लक्षणं क्रियेत तदा मन-
स्यतिव्याप्तिरित्यर्थः । नन्विदमनुपपन्नम् एतावतापि नभस
इन्द्रियसमवायिकारणत्वाभावात् स्पर्शवत एव द्रव्यसमवा-
यिकारणत्वात्, श्रोत्रेन्द्रियस्य नित्यत्वाच्च; न च भूतेभ्य
इत्यनुपपन्नम् इन्द्रियाणि भूतात्मकानीति सूत्रतात्पर्यात्,
एवंच न पूर्वोक्तमुपपन्नमत आह–प्रकृतीति । मनस्यति-
व्याप्तिवारणाय बाह्येन्द्रियस्वभावत्वं लक्षणमित्या-
ह–तथा चेति । ननु बाह्यत्वं यदि शरीरानवच्छिन्नस्य
ज्ञानजनकत्वं तदा चक्षुष्येव याति तस्य शरीरं विहायापि
कस्यचिद्भागस्य विषये संबन्धादत आह–अनात्मेति । आत्म-
गुणाग्राहिणेत्यर्थः । मनसा पृथिव्यादिगुणस्यापि ग्रहणेन
यथाश्रुतेऽसंभवादित्याशयः । ननु संख्यादयोऽप्येकेन्द्रियज-
न्यग्रहविषया, न हीन्द्रियद्वयेनैको ग्रहो जन्यत इत्यत आह–
प्रतिनियतेनेति । एकबाह्येन्द्रियजग्रहमात्रविषयत्वं वि-
वक्षितमित्यर्थः । इन्द्रियत्वं नानुगता जातिर्जातिसंकरात् ।

तथा च । घ्राणत्वादिकमेव तत्, एवं चाननुगमोऽत आह—
साक्षात्कारीति । न हि जातिरेवानुगमिकेति भावः । अती- 37.1
न्द्रियगुणसंग्रहायाह —योग्या इति । ग्राह्यजातीया इ- 171. 4
त्यर्थः । ननु विशेषगुणत्वं व्यावृत्तगुणत्वं तत्संख्यादावपि,
न हि संख्यादयो रूपादिभ्यो न व्यावृत्ता अत आह—पर-
स्परमिति । जातिपुरस्कारेण स्वाश्रयैकद्रव्यव्यवच्छेदहेतव
इत्यर्थः । न च रूपाद्यसंग्रहः तत्र रूपत्वाद्यवान्तरजातिस-
त्त्वात । न हि संख्यादावपि तथास्ति, संख्यात्वादि तु नैक-
द्रव्यव्यावृत्तौ हेतुत्वावच्छेदकम्, एतत्संख्यात्वादि तु गन्ध-
समानाधिकरणसंख्यात्वादिरूपं न जातिरिति भावः ।
ननु विशेषपदमेकैकपदं वा व्यर्थं वारणीयस्य संख्यादेरेकेनैव
वारणादत आह-अत्रेति । बाह्यपदं त्वात्मवारणायेत्यर्थः ।

द्रव्यनिमित्तकारणत्वं कालादावपीत्यत आह-द्रव्येति ।
गुणसमवायिकारणतावारणाय द्रव्येति । एकार्थसमवायवा-
रणायाह-समवाय इति । अपकृष्टमणुत्वं पृथिव्यादिष्वेव
यद्वणुकरूपेषु, मनसि तु प्रकर्षकाष्ठाप्राप्तमेवाणुत्वं परत्र
त्वणुत्वमेव नास्ति; अपकृष्टं महत्त्वं तु पृथिव्यादिष्वेव
त्र्यणुकादिरूपेषु, आकाशादिषु तु प्रकर्षकाष्ठां प्राप्तमेव तत्,
मनसि तु नास्त्येवेत्याह-अवान्तरेति । स्थितीति ।
मनसि त्वेकदेशिनो मते । शरीरेति । असाध्यारम्भकत्वं
समवायिकारणत्वं कारणत्वमात्रस्य शरीरस्य पाञ्चभौतिक-
तया आकाशे कालादौ च गतेः ।

बाह्येति । अन्यथा मनोग्राह्ये आत्मन्यतिव्याप्तेरि-
त्यर्थः । संभाव्यत इति । न तु रूपवद्व्यापकं घटादौ
पृथिव्यां सूर्यादौ च तेजस्यभावादित्यर्थः ।

तत्कार्यं गुरुत्वकार्यम् । लक्षणं तु पतनमात्रं गुरुत्वासमवायिकारणकक्रियाया एव पतनत्वात् । शृङ्गारादिर्बा-
37.12 173.6 धितोऽत आह—माधुर्यादिरिति । आलोकेति । आलोकस्तु न विषयातिरिक्तालोकप्रकाश्यः, रूपादिस्तु द्रव्यपदेन वारणीय इत्यर्थः । अभास्वरेति । तेजो भास्वररूपमन्यत्तु नीरूपमेवेत्यर्थः ।

वैशेषिकमतसिद्धा गुणाः संख्यादयोऽपीत्यत आह—स्वाश्रयेति । प्रत्येकेति । कालादौ न तादृशो गुण इत्यर्थः ।

न तु गुणा इति । य एव चतुर्दश गुणा एकत्र त एव नान्यत्रेत्यर्थः । नन्वीश्वरात्मनि न चतुर्दश गुणा इत्यत आह—संभावितमिति ।

ननु क्षणमात्रस्थायित्वं नास्मन्मतसिद्धमत आह—आशुतरेति । क्षणत्रयाव्यापका इत्यर्थः । ननु रूपादिरप्येकदेशवृत्तिरेव घटरूपस्य घटं विहाय देशान्तरेऽवृत्तेरत आह-अव्याप्येति । अत्रापीति । द्वित्वादीनां क्षणत्रयाव्यापकत्वेऽपि विशेषगुणत्वाभावात् । संयोगादीनामव्याप्यवृत्तित्वेऽपि तत्त्वाभावादिति भावः ।

अनतिप्रसक्तये नियममन्तर्भावयति—पञ्चैवेति ।

असंभववारणाय तत्समवेतकार्यं वारयति-तत्समवेतेति । वस्तुतस्तु निमित्तपदस्य व्यर्थतया एतावान् श्रमोऽपि व्यर्थ इति भावः । तथाचेति । तत्पदस्यधिकरणतया प्रतीयमानं पूर्ववर्त्यवश्यं कारणमित्यर्थः । तेन नोत्पत्तिक्षणे व्यभिचारः । अत्र व्यभिचारं शङ्कते-गेह इति । तस्यापि कारणतया न व्यभिचार इत्याह-तस्यापीति । न हीति । षट्कारकान्तर्भावादिति भावः । यद्येवमिति ।

यदि कारकत्वेन गणितानां कारणत्वमेव तदा क्वाप्यात्मा संप्रदानमिति कारणं क्वापि तु दुःखाभावादावधिकरणतया तथा, यत्र तु नैतदुभयं तत्रादृष्टद्वारा कारणत्वमस्ति भोगसाधने घटादाविति सर्वोत्पत्तिमन्निमित्तकारणत्वमनतिप्रसक्तमित्यर्थः। अधिकरणतयेति। तच्चात्मनि क्वचिदस्ति न तु सर्वत्रेत्यर्थः। दिगिति। अत्रोपाधिपदं संपातायातं तस्याधिकरणत्वेऽपि तयोरधिकरणत्वानुपन्यासात्, दिक्कालोपाधी मूर्तक्रियासंयोगी आत्मोपाधिः शरीरम्। परत्वेति। तदनाश्रयत्वे सति तदसमवायिकारणसंयोगाधारत्वमित्यर्थः। ताभ्यां मूर्ते इतरभेदस्याप्यनुमानात्। 39.1 179.1

नैमित्तिकत्वं यदि निमित्तकारणात्कारणाद्वोत्पद्यमानत्वं तदा जलद्रवत्वेऽपि गतमत आह–अग्नीति। निमित्तात् कारणात्। तस्यासमवायिकारणत्वात्। एतस्य संभावितत्वमाह–सुवर्णादाविति।

अनेनेति। कस्यचिल्लक्ष्येऽन्तर्भावेन कस्यचिच्च बहिर्भावेनेत्यर्थः। साधर्म्यमिति। अनुगमकत्वव्यावर्तकत्वे यदि साधर्म्यत्ववैधर्म्यत्वे तच्चैकस्यापि संभवत्येव लक्ष्याणामनुगमकत्वात् अलक्ष्याच्च व्यावर्तकत्वादिति भावः। अथवेति। साधर्म्यस्य विपर्ययोऽन्यस्मादन्यस्य साधर्म्यं वैधर्म्यविपर्ययोऽप्यन्यस्य वैधर्म्यं चेत्यर्थः। वैधर्म्यविपर्ययः साधर्म्यमित्युदाहरति–गन्धवतीति तद्विपर्ययात्तद्विपर्यय इत्यर्थः। साधर्म्यमेव वैधर्म्यमित्युदाहरति–उक्तमिति। तद्विपर्ययात् व्यावर्तकत्वात्। साधर्म्यविपर्ययः साधर्म्यमित्युदाहरति–विपर्यय इति। परार्थत्वं परोपकारकत्वमात्मन्यपि पुत्रादिना पित्रादेरुपकारकरणादिति चेन्न।

भोगानधिकरणत्वस्य विवक्षणादिति केचित्, तन्न । ननु सर्वस्य चेतनादन्यस्य परार्थत्वादित्यादिपृथिवीग्रन्थकिरणावलीविरोधात् । तस्मात्परमात्मप्रयोजनकत्वं विवक्षितम्, आत्मा तु न तथा तेन स्वप्रयोजनस्यापि साधनात् । नन्वेतावतापि स्वप्रयोजनासाधनत्वे सति परप्रयोजनसाधनत्वमुक्तं तत्र स्वप्रयोजनासाधनत्वमात्रं समर्थमिति चेन्न । एतदस्वरसादेवाचेतनत्वस्याभिधानात् तस्य च वैधर्म्येण लक्षणत्वाभावेऽपि साधर्म्यत्वसम्भवात् । न हि तत्प्रकारकोऽनुगतबोधोऽन्यस्माद्भवति ततो वा न भवतीति भावः । अनन्तःकरणत्वमन्तःकरणभिन्नत्वं, न त्वनान्तरत्वे सति करणत्वम् अकरणेऽव्याप्तेः एवमणुकरणभिन्नत्वं विवक्षितं, न त्वनणुत्वे सति करणत्वं पूर्वोक्तदोषात् । अक्लेदत्वं
40.6 सांसिद्धिकद्रवत्वराहित्यम् । अपाकजेति । पीलुपाकमतेऽत्र-
183.5 यविनि पार्थिवेऽतिव्याप्तिरिति चेन्न । पाकाप्रयोज्यत्वस्य विवक्षितत्वात् । एवमग्रेऽपि । अतीन्द्रियत्वम् ऐन्द्रियकवृत्तिद्रव्यविभाजकोपाधिरहितद्रव्यत्वं, तेन न परमाण्वादावतिव्याप्तिः । वृत्तिलाभः ज्ञानादिकार्यजनकत्वं, न हि शरीरानवच्छिन्न आत्मादिर्ज्ञानादि जनयतीत्यर्थः ।

ननु मोक्षजनकस्य वैधर्म्यज्ञानस्यैतावतैव पर्याप्तत्वात्किमग्रिमग्रन्थेनेत्यत आह--तदेवमिति । द्रव्यत्वादिभिर्हि गुणादिप्रतियोगिको भेदः सिद्धः, अन्त्यविशेषवत्त्वादिभिस्तु न द्रव्याणीतरेभ्यो भिद्यतेऽन्त्यविशेषवत्त्वादित्याद्यनुमानमनित्यद्रव्यादौ भागासिद्धेः, नापि आकाश इतरेभ्यो भिद्यतेऽन्त्यविशेषवचनादिति कालादौ व्यभिचारात् । तर्हि तदभिधानं व्यर्थमिति चेन्न । नित्यद्रव्याणीतरेभ्यो भिद्यन्त इति

व्यावृत्तिबोधस्य ततः संभवात् । एवं च पृथिव्यादिषु परस्परस्य विवेको न सिद्धः पूर्वग्रन्थेनेति तदर्थमग्रिमप्रकरणारम्भ इति हृदयम् ।

प्रकरण इति । अग्रिमेषु प्रकरणेष्वित्यर्थः । अवस-
रेति । प्रतिबन्धिकाया अनेकधर्मजिज्ञासाया अवान्तरनिरूपणे- 41.6 186.4
नापगमादित्यर्थः । एकैकमिति । वीप्सयाऽनेकत्वमात्रं प्राप्तं कप्रत्ययेन त्वशेषत्वमित्यर्थः । यद्यपि वीप्साया एव तावत्सामर्थ्यम् अन्यथा सर्वत्र वीप्सास्थले शेषत्वाभावोपायाकारानुसरणापत्तेः, तथापि प्रकृतवीप्सा द्रव्यमादाय न मूर्तान्यादायेति व्यर्थत्वाद्बोधयति । पृथिवीत्वं नोपाधिः जातित्वे बाधकाभावादित्याह—पृथिवीत्वं नामेति । न त्विति । एकार्थसमवायो गुणादौ संयुक्तसमवायो जलादावतिप्रसक्त इति भावः । लक्षणेन स्वरूपसिद्धिरिति भ्रान्त्या शङ्कते—नन्विति । स्वरूपासिद्धौ लक्षणमिदमस्येत्येव वक्तुमशक्यं सिद्धौ तु तत्सिद्धये लक्षणवैयर्थ्यमित्यर्थः । सिद्धे स्वरूपे लक्षणेनासिद्धो व्यवच्छेदः साध्यते, एवं च नाश्रयासिद्धिर्निष्प्रयोजनत्वं इत्याह—स्वरूपेति । ननु पृथिव्यां नेतरभेदः साधयितुं शक्यते पृथिव्याः पक्षत्वेन जलादेर्विपक्षत्वेन दृष्टान्ताभावादत आह—तथाहीति । एवं च व्यतिरेकतया नान्वयिदृष्टान्तापेक्षेति भावः । ननु साध्यप्रसिद्धिर्व्यतिरेकिण्यप्यपेक्षिता, अन्यथा अभावज्ञाने व्यतिरेकव्याप्तेर्दुर्ग्रहत्वमिति शङ्कते तथापीति । साधनेति । जलादिव्यवच्छेदस्य पृथिव्यामेव प्रसिद्ध्यसंभवादित्यर्थः । तत्राप्यनुमानात्सिद्धौ सैवाप्रसिद्धिरित्यत आह—प्रत्यक्षेति । ननु प्रत्येकभेदे घटादौ साध्यसिद्धेः सिद्धसाधनं स्यादत आह—कि-

42.1 न्त्विति । उद्देश्यप्रतीतिसिद्धौ हि सिद्धसाधनं, न च घट
191.3 इतरभिन्न इति प्रतीतिरुद्देश्या, किन्तु पृथिवीतरभिन्ने-
त्याकारा, सा च न सिद्धेति भावः । अत एव भूगोलकनित्य-
त्वेनाश्रयैकदेशे साध्यसिद्धौ न सिद्धसाधनमित्युक्तम् । अवच्छिद्यतेऽनेनेत्यवच्छेदो विशेषणं, तद्भेदस्तद्विशेषो घटत्वादिस्तस्य व्यावृत्त्या उपलक्षिता व्यावृत्तिरित्यर्थः । एवं च घटत्वादिविशेषधर्मैकवृत्तौ सकलाश्रये सिद्धायामपि सामान्यधर्मेण व्यावृत्त्यामुद्देश्यायां सिद्धसाधनं न भवतीत्युक्तं भवति, पृथिवीत्वनिमित्ताक्रान्त इत्यनेन सामान्यधर्मान्तरेण व्यावृत्तौ सिद्धायामपि सामान्यान्तरेणोद्देश्यतायां सिद्धसाधनं न भवतीत्युक्तम् । व्याप्त्या व्यतिरेकव्याप्त्या । एवं च व्याप्त्यन्तरेण प्रत्यक्षादिना वा व्यावृत्तौ सिद्धायां व्यतिरेकव्याप्त्योद्देश्यतायां सिद्धसाधनं न भवतीत्युक्तम् । एवं चोद्देश्यप्रतीतिसिद्धौ सिद्धसाधनं, सा च प्रकृते नास्ति सकलविषयिण्या अभावात् यत्किञ्चिद्विषयकत्वात् सामान्यप्रकारिकाया अभावात् विशेषप्रकारकत्वात् पृथिवीत्वरूपसामान्यप्रकारिकायाश्च सुतरामभावात् व्यतिरेकव्याप्तिसाध्याया अभावात् प्रत्यक्षसाध्यायाः सत्वात्-एवं च प्रकृते न सिद्धसाधनमिति सकलाशयः । केवलेति । अत्र केवलपदानुपादानेऽन्वयव्यतिरेकिण्यतिव्याप्तिः विशेषश्च न केवलव्यतिरेकित्वमेवेत्येके । व्यवहारभेदान्यतरसाधकत्वं विशेषः, तेनैतदन्यतरासाधकस्य केवलव्यतिरेकिणोऽपि न लक्षणत्वमित्यन्ये । तथाचेति । नन्वेतस्य द्वितीयपक्षे समनियतत्वं संभवति, प्रथमपक्षे तु

कथं, व्यवच्छेदसाधनस्य तत्र लक्षणे प्रवेशादिति चेन्न । समानासमानजातीयव्यवच्छेदसाधनेऽन्वयदृष्टान्ताभावप्राप्त्या प्रथमपक्षेऽपि लक्षणप्रविष्टस्य केवलव्यतिरेकित्वस्य प्राप्तेः । लक्षणार्थः लक्षणसाध्यः यादृशसाध्यसिद्धिरुद्देश्या तादृशी न सिद्धेति शङ्कते—एवमिति । न हि येनोपायेन पक्षे 42.6 193.3
साध्यसिद्धिस्तेनैव पूर्वमपेक्षिता येन व्यतिरेकव्याप्त्या साध्यसिद्ध्यभावात्साध्याप्रसिद्धिः स्यात् नापि पक्षतावच्छेदकावच्छेदेन साध्यसिद्धिरपेक्षिता येन तदभावाप्रसिद्धिः स्यात् । अस्ति तु साध्यतावच्छेदकावच्छिन्नसाध्यप्रसिद्धिः, सा चास्त्येवेत्याह—पक्षेति । पक्षसंबन्धितया प्रसिद्धिर्नापेक्षितेत्यर्थः । तथा सतीति । यादृशी प्रतीतिरुद्देश्या तादृश्याः सिद्धौ सिद्धसाधनमेव स्यादित्यर्थः । तथापीति । ऋजुमार्गेण सिद्ध्यतोऽर्थस्य वक्रेण साधनादित्यर्थः । आसन्नामिति । यदान्वयव्याप्तिस्फूर्तिस्तदा भवत्वन्वयी, यदा तु न तदा व्यतिरेकव्याप्तिरेव स्वीकार्या, एवं च दशाविशेषे केवलव्यतिरेकित्वसत्त्वासन्नायां दशायां लक्षणमनुपपन्नमित्यर्थः । व्यवहारविषयस्येति । पक्षस्येत्यर्थः । संमुग्धस्येति । विषयविशेषानालिङ्गितस्येत्यर्थः । निमित्तेति । पृथिवीत्वनिमित्ताक्रान्तस्य पक्षस्येत्यर्थः । तादृशि पक्षे साध्यसिद्धिरुद्देश्या, सा च न सिद्धेति भावः । सर्वेति । अन्वयास्फूर्तिदशायामित्यर्थः । एतेन पक्षान्यत्वं न दृष्टान्तत्वे प्रयोजकं किन्तु निश्चितसाध्यवत्त्वं, तथा च केनचिद्रूपेण पक्षत्वे केनचिद्रूपेण तन्न विरुद्धमिति निरस्तम् । व्याप्त्यस्फूर्तेः संभवात् । वस्तुतस्तु विषयविशेषानालिङ्गित एव व्यवहारः प्रकृते सिद्धः, न तु घटादिविषयः,

43.5 196.6 अत एवोक्तं—सर्वेति । तथा च सर्वत्र साध्यसंदेह एवेति दृष्टान्ताभावान्नान्वयीति हृदयम् । इतरभेदस्तु नाधिकरणनिरपेक्षोऽव्यक्तीकर्तुं शक्यते इति घटादौ साध्यप्रसिद्धिरुक्ता, अत्र तु नाधिकरणापेक्षा पृथिवीति शब्दप्रयोगस्य तन्निरपेक्षस्यापि ग्रहणसंभवात् । अत एवोक्तं संयुज्यतेति तत्त्वम् । पृथिवीव्यवहारः पृथिवीत्वनिमित्तकः पृथिवीत्वान्वयव्यतिरेकानुविधायित्वादित्यनुमानेऽन्वयमुखेनोदाहरणमुपन्यस्तं न सङ्गच्छते—यद्यस्येति । अत्र हि घटो दृष्टान्तः कृतः, न च तत्र पृथिवीत्वनिमित्तकत्वं साध्यमिति कथमन्वयः, न च तन्निमित्तकत्वमस्तीति दृष्टान्तता तस्यासाध्यत्वादित्याह—पृथिवीत्वेति । अर्थैक्येऽन्वयदृष्टान्तता न शब्दैक्य इत्याह—केवलमिति । सोऽन्वयश्च त्वया प्रयुक्तः । वस्तुगत्या तत्र घटदृष्टान्ततायां व्यतिरेकोदाहरणप्रयोग एव प्रकृतसाध्यहेत्वोस्तत्राभावादित्याह—स चेति । प्रकृतानुमानप्रयोग इत्यर्थः । न तु यद्यस्येत्यादिप्रकृतोदाहरणप्रयोगस्तत्र साध्याभावहेत्वभावयोरप्रदर्शनादिति भावः । अत एव कथं प्रकृतानुमाने व्यतिरेकीत्याशङ्क्याह—विवक्षेति । त्वद्विवक्षितप्रकृतप्रयोगे परं न व्यतिरेकी, यत्र पृथिवीत्वनिमित्तकत्वनिमित्तकत्वाभावस्तत्र पृथिवीत्वान्वयव्यतिरेकानुविधायित्वाभाव इति विवक्षाभेदजन्ये प्रयोगे व्यतिरेकी संभवत्येवेत्यर्थः । पर्याय इति । एवं च लिङ्गस्यान्वयव्यतिरेकिणा नियमेन लक्षणमपि तथेति न केवलव्यतिरेकी हेतुर्लक्षणमित्यर्थः । व्यावृत्ताविति । लिङ्गादेरपि नान्वयव्यतिरेकिणा नियम इत्यर्थः । एवं च तद्विशेषस्य लक्षणस्य केवलव्यतिरेकित्वं न विरुद्धं, पर्यायत्वं नास्त्येवेति भावः । भेदे साधनीयेऽन्वयी संभवत्यपि तत्प्रत्य-

सत्त्वाधिकरणविशेषविषयकत्वानियमात् इति तदस्फूर्तिदशायां केवलव्यतिरेक्युक्तः, पृथिवीपदशक्यत्वे तु साध्ये न तथा संमुग्ध प्रसिद्धेरेवाङ्गीकृतत्वादित्याह-व्युत्पन्नस्येति । गृहीतशक्तिको 43.13 197.4
हि न शक्तिं साधयति सिद्धसाधनात्, अगृहीतशक्तिकस्तु नान्वयी संभवति दृष्टान्तापरिचयात्, साध्यप्रसिद्धिस्तु संमुग्धैवेत्यर्थः । कथमिति । यदि भेदादिसाधकस्यैव लक्षणत्वमित्यर्थः । तस्य द्रव्येतरावृत्तित्वमात्रमुक्तं न तु लक्षणत्वमित्याह-द्रव्यस्येति । समवायिकारणत्वादिलक्षणनिकटे पठनं तद्भेदसाधारणत्वबोधनायेति भावः । द्रव्यं गुणादिभ्यो भिद्यते क्रियावत्त्वादित्यत्र भागासिद्धिः आकाशादावभावात् । मूर्तद्रव्यं गुणादिभ्यो भिद्यते क्रियावत्त्वादित्यत्रासाधारण्यं सपक्षादाकाशादेरपि व्यावृत्तत्वादित्याह—न त्विति । ननु लक्षणकथनावसरे तत्कथनमर्थान्तरग्रस्तमत आह-तस्मादिति । प्रकृतोपयोगित्वान्नार्थान्तरत्वमिति भावः । अप्रत्यक्षत्वेनेति । तथाच प्रत्यक्षेण प्रमाणेन द्रव्यत्वाग्रहणाद्विप्रतिपत्तिः संभवतीति भावः । ननु प्रमाणं व्यवस्थिततयाऽज्ञातमपि व्यवस्थापकं यथा घटः पटाद्भिन्न इत्यादिप्रतीतिजनकं चक्षुरादि, लक्षणं तु व्यवस्थिततया ज्ञातमेव व्यवस्थापकम्, एवं चानवस्था स्यादित्याह—यत्त्विति । तेषामिति । न हि सर्वत्र प्रत्यक्षमितरभेदसाधकं किन्तु क्वचिदनुमानमपि, तच्च यद्यव्याप्तं तर्हि भागासिद्धमेव स्यात्, अथातिव्याप्तं तर्हि व्यभिचारः, एवं च तदुभयरहितं वाच्यं, तदेव चान्वयव्याप्त्यस्फूर्तिदशायां व्यतिरेकितया लक्षणमिति प्रमाणं व्यवस्थापकं लक्षणं न व्यवस्थापकमिति वाक्यं पिबामि न पिबामीतिवद्विरुद्धमिति

भावः । नन्वस्माभिः क्वचित्प्रसिद्धं साध्यते, तत् संभवति,
भवता त्वप्रसिद्धं साध्यते, तच्च न संभवतीति
44.5 शङ्कते अनुवाद इति । मूलक्षतिकरी अनवस्था न
199.2 भवति पूर्वव्यवस्थितैः प्रकृतलक्षणव्यवस्थाकरणात्, तदैव
तस्यापि व्यवस्थाया अभावात् इत्याह—न चेति । तत्रापि
संमुग्धां साध्यप्रसिद्धिमादाय लक्षणैर्व्यवहारः साध्यते,
तच्च तदोपपद्यते, यदा लक्षणपरम्पराव्यवस्थापनं तदा
नोपेक्षितम् अन्यथाऽनवस्था स्यादित्याह—तत्रापीति ।
पृथिवी इतरेभ्यो भिद्यते रूपवत्त्वादित्यनुमानं माऽस्तु
जलादौ व्यभिचारात्, गन्धसहचरितरूपं तु न व्यभिचरती-
त्यत आह—नन्विति । एवं हि गन्धवत्त्वे सति रूपवत्त्वादिति
हेतू कार्यं, तत्र च रूपपदवैयर्थ्यमित्याह—विशेषणेति ।
अत्र विशिष्यत इति व्युत्पत्त्या विशेषणपदं विशेष्यपरं
प्रकृते तस्य विशेषणत्वाभावात् । स्फुटयिष्यतीति ।
गन्धस्यासाधारणत्वं निकटव्याख्याने एव प्रकटमित्यर्थः ।
रूपिद्रव्यसमवायश्चाक्षुषत्वे हेतुरुक्तस्तत्र सकलरूपिद्रव्यस-
मवाये संभवति न संकोचो युक्त इत्यभिप्रेत्याह इति
सूत्र इति । ननु लघुगुरुत्वं पृथिवीपतनकारणमत आह—ना-
पीति । विपर्यासेति । यत्र नोदना तत्रैव क्रियेति सामाना-
धिकरण्यदर्शनादित्यर्थः । सूत्रकारस्य य आप्तत्वं न जानाति
तं प्रत्याह—तदनेनेति प्रत्यक्षमिति। प्रत्यक्षान्यथासिद्धिवारि-
कोपपत्तिरित्यर्थः । मीमांसकेति । कर्मणः कर्मसमवायि-
कारणत्वाभावादित्यर्थः । दुर्दुरूढत्वपाठे मीमांसकस्य
विशेषणं दुर्दुरूढपाठे विप्रतिपत्तेः । क्रियामध्याहरति—वर्तत
इति । एवकारार्थमाह— नेति । तेनेति । द्रव्यान्तरेऽविद्यमा-
नत्वेनेत्यर्थः । यत्त्वित्यादि । स्वाभाविकत्वेऽन्यान्वयाद्यनु-

विधानं न स्यादित्यर्थः । क्षित्यन्तर्गतेषु मणयादिष्वसंभवेन कथं व्यञ्जकत्वमिति शङ्कते-नन्विति । पाकजरूपस्य प्रत्यक्षसिद्धतया तेन गन्धानुमानान्नाव्याप्तिरित्याह-पाकेनेति । योग्यानुपलब्धेरभावान्नानुपलब्धिबाध इत्याह-अनुद्भवादिति । अनुपलब्धिमात्रस्य बाधकत्वे घ्राणेऽपि गन्धो न स्यादित्यर्थः । अभिप्रायवानिति । अनेन ग्रन्थेन गन्धानुमानुरूपस्य पाकजत्वस्य प्राप्तेरिति भावः । ननु कथमनेकविधं रूपं पृथिव्याम् ? न तावत् शुक्लत्वाद्यनेकजातिमद्रूपमेकं नानाविरुद्धजातेरेकत्रासंभवात् । नाप्येकदा शुक्लाद्यनेकं रूपं न हि तदाश्रयं व्याप्य तिष्ठति सर्वावच्छेदेन शुक्लस्य सर्वावच्छेदेन च पीतादेरननुभवात् । नाप्यव्याप्य स्थास्यति संस्कारत्वान्यबहिरिन्द्रियग्राह्यगुणत्वावान्तरजात्या व्याप्यवृत्तिजातीयस्याव्याप्यवृत्तिताविरोधात् । संस्कारत्वान्येति विशेषणान्न वेगस्य व्याप्यवृत्तित्वे भावनाया अव्याप्यवृत्तित्वे व्यभिचारः । ग्राह्येत्यन्तेन न ज्ञानादौ व्यभिचारः तस्येश्वरे व्याप्यवृत्तेरस्मदादावव्याप्यवृत्तित्वात् । अवान्तरविवक्षया न संयोगादौ व्यभिचारः गुणत्वेन व्याप्यवृत्तिरूपादिसजातीयस्य तस्याव्याप्यवृत्तित्वात् । ननु यदि व्याप्यवृत्तिसजातीयं नाव्याप्यवृत्ति तदा चित्ररूपप्रतीतिर्न स्यात् अवच्छेदभेदभेदेन विद्यमाननानारूपैरेव चित्ररूपव्यवहारादिति चेन्न । शुक्लस्येव चित्रस्यापि विजातीयस्य स्वीकारात् । ननु तर्हि स्वस्वाश्रये विद्यमानानि प्रत्येकरूपाण्येव व्यवस्थापकानीति चेन्न, अव्यापकत्वात् इत्याह-यद्यपीति । एकदा नानारूपाभावेऽपि पाकवशेन नानारूपं पृथिव्यां

47.13 206.1 संभवति न द्रव्यान्तर इत्याह—तथापीति । अपि च नीलादिरूपं स्वभावादेव न द्रव्यान्तरे, शुक्लं त्ववान्तरजातिमदित्याह—किञ्चेति । शुक्लं रूपं जगतीगतमेकमेव घटत्ववत् तद्वदेवाश्रयव्यङ्ग्यं च । एकत्वे सातिशयत्वं न स्यादिति चेन्न । कृष्णद्रव्यसंबन्धाभ्यां तदुपपत्तेः । एवं चैकव्यक्तितया शुक्लत्वमेव न जातिः कुतोऽवान्तरजातिप्रत्याशेति केषाञ्चिन्मतमाह—ये पुनरिति । दूषयति-तेषामिति । ननु संबन्धस्योत्पादनाशावित्यत आह—अनेकेति । अत्र निरतिशयत्वं प्रसङ्गादुक्तं शेषस्यैव सामान्यत्वे प्रयोजकत्वात् । अस्त्विति । तथापि न तत्रावान्तरजातिरिति भावः । गोत्वादिनेति । शुक्लं वाससि न गोत्वं, गोत्वं नीलायां गवि न शुक्लं, शुक्लायां गवि द्वितयमपीत्यर्थः । गन्धस्यैवाव्याप्यव्याप्तिं परिहरति—अस्यापीति । मधुरादयो रसवन्तः पाकजरूपवत्त्वादित्यर्थः । अत्रापीति । सातिशयो रसः पृथिव्यामेवेत्यर्थः । जलरसे परस्परमुत्कर्षापकर्षप्रतीतिरौपाधिकीत्याह—अपामिति । यद्यपि पृथिवीरसापेक्षयोत्कर्षापकर्षौ जलरसे स्तस्तथापि न सजातीयरसापेक्षया पृथिव्यामिवेति भावः । एवं च गन्धः स्वरूपेणैव भेदकः रूपरसौ त्ववान्तरानेकजातिमत्तयेत्युपसंहरति—तेनेति । स्यादेतादिति । सुरभिगन्धवती पृथिवी असुरभिगन्धवद् द्रव्यान्तरं व्यत्ययो वाऽस्त्वित्यर्थः । पाकज इति । गन्धभेदो न द्रव्यभेदव्यवस्थापकः एकस्मिन् कुसुमे गन्धभेदस्य क्रमेण दर्शनादिति हृदयम् । ननु स्पर्शस्य लक्षणतायामनुष्णाशीतत्वं विशेषणं व्यर्थं पाकजत्वेनैव जलादिवारणादित्यतो लक्षणभागे तावन्तमेव (?) भाष्यं गृह्णाति स्पर्शोऽस्याः पाकज

इति । तेजसेति । तेजःसंयोगासमवायिकारणकत्वस्यैव
पाकजशब्दार्थत्वादित्यर्थः । स्फुटत्वादिति । यथा शुक्लरूप- 19.2
सति तेजःसंयोगे सति कृष्णादि दृश्यते, मधुररससत्यम्लादि, 211.8
सुरभावसौरभं, नैवं पृथिव्यां पूर्वस्पर्शविजातीयः स्पर्शः
अनुष्णाशीतस्यैव विद्यमानत्वात् । एवं च तेजःसंयोगे जातेऽपि
तत्र पूर्वस्पर्शाद्भिन्नः स्पर्शो जात इति प्रतीतेः साजात्यतिर-
स्कृतत्वात् तेजःसंयोगं विना पूर्वमजातस्तेजःसंयोगे सति
सांप्रतं जात इत्यन्वयव्यतिरेकाग्रहात्तत्कारणकत्वं पाक-
जत्वं ग्रहीतुं प्रत्यक्षेण न शक्यते इति पाकजत्वे स्पर्शस्य
विप्रतिपत्तिरित्यर्थः । यद्यपि मृदुत्वकठिनत्वादिना वैजा-
त्यमनुभूयत एव तथापि शीतत्वादिना नानुभूयत इत्यभि-
प्रायेणैतत् । पृथिवीस्पर्शः पाकजः पृथिवीगुणत्वादिदं परि-
माणादौ व्यभिचारीत्याह—पार्थिवेति । अविशिष्टः दुःखवि-
शेषादिप्रयोजकवैजात्यशून्यः । दर्शनेति । द्रव्यस्यैकतया
प्रायश्चित्तभेदो न स्यात् । एवं च तत्र रूपादिगुणपुरस्कारव-
दिह स्पर्शपुरस्कार इत्याशयः । ननु भवतु दुःखविशेषादि-
प्रयोजकवैजात्यं, न हि तत्पाकप्रयोज्यमेव, आतपस्पर्शे
सति दुःखस्य जलस्पर्शे सति तदुपशमस्य च दृष्टेः । विधिनि-
षेधौ च न स्पर्शविषयकौ तस्य स्वकारणबलायातस्याकरणात्,
किन्तु संयोगविषयौ साधारणौ च गङ्गाजलचाण्डालजल-
योः । न च स्पर्शज्ञानस्य तौ चाण्डालस्पर्शस्य जलस्पर्शा-
दिनाऽभिभवे तत्संयोगेऽपि प्रायश्चित्ताभावप्रसङ्गादित्यत
आह—तस्मादिति । अनुकूलस्तु तर्को मृदुत्वाद्युपलम्भ
एवेति तत्त्वम् ।

अनुष्णेत्यादिभागस्य लक्षणेऽप्रवेशाद्भाष्यवैयर्थ्यमा-

शङ्काह—ये त्विति । अनुष्णेति । तयोश्च तेजोजलयो-
रेव सत्त्वादिति भावः । नन्वनुष्णाशीत उपलभ्यत इत्यत
49.16 216.2 आह–शैत्यमिति । परस्पराभिभूताभ्यां शीतोष्णाभ्या-
मेव तत्प्रतीतेरन्यथासिद्धिरिति भावः ।

बलवादिति । न तावत्समबलहीनबलाभ्यामभिभवः किन्त्वधिकबलेन, तथा च तस्यान्यतरस्योपलम्भे शैत्यमौष्ण्यं वोपलभ्येत, तथा चानुष्णाशीतप्रतीतेर्न ताभ्यामन्यथासिद्धिरिति तृतीयः स्पर्शः स्वीकार्य इति भावः । अपि च जलतेजसोरसम्बन्धेऽपि स्पर्शोपलब्धेस्तृतीयस्पर्शसिद्धिरित्याह—तथाविधे इति । निबिड इत्यर्थः । एतावता तेजसोऽसंबन्ध उक्तः शुक्लेत्यनेन जलासंबन्धः । अनवस्थेति । अनित्यद्रव्यस्य सावयवत्वनियमादित्यर्थः । नन्वनित्यमपि रूपादिवन्निरवयवं स्यादत आह—एकस्येति । अत्र षष्ठी व्यधिकरणा एकस्य कस्यचिच्चरमत्वेनाभिमन्यमानस्य तस्यावयवस्य निवृत्तौ निरवयवत्वे कार्यं मात्रकार्यं निराश्रयं स्यात् । एवं च न दृष्टं रूपादेरवयवाभावेऽप्याश्रयवत्त्वात् । प्रकृते तु तस्य द्रव्यसमवायिकारणत्वेनावयवत्वादिति भावः । निष्प्रामाणिकेति । यत्र प्रत्यक्षं प्रमाणं कार्येषु घटादौ तत्पृथिवी भवत्येव नानित्यत्वात् । नित्यं च न प्रत्यक्षं, न चैतस्य प्रत्यक्षस्य समवायिकारणतया तस्य सिद्धिः, तेन तत्सजातीयस्यैव सिद्धेरिति भावः । नन्वेकेनैव समुच्चयसिद्धेश्चकारद्वयं व्यर्थं, न च नियमनिराकरणाय द्वितीयः समुच्चये सिद्धे नियमनिराकरणस्यापि तत एव सिद्धेरिति चेन्न । एकेन लब्धस्य नियमनिराकरणस्य समुच्चयस्य वा द्वितीयेन प्रामाणिकत्वाभिधानात् । व्यर्थमिति न्यायात् । ननु नित्या-

यां तथापि प्रमाणं नोक्तमित्याह—का पुनारीति । महत्त्वात् 50.8
चाक्षुषमहत्त्वात् यत्कार्यत्वं तेनानित्यत्वेत्यर्थः । चाक्षुषपदो- 218.8
पादानान्नाकाशादौ व्यभिचारस्तन्महत्त्वस्याचाक्षुषत्वात् । कार्यत्वं च भावत्वे सति, नातो ध्वंसे व्यभिचारः । नोपलभ्यते न प्रत्यक्षीक्रियते, तथा च न प्रत्यक्षं प्रमाणमित्याशयः ।

लक्षणपदस्य धर्मपरत्वे धर्मी भिन्नोऽन्वेष्टव्यः स्यादत आह—स्वभाव इति । ननु तथापि प्रमाणं नोक्तमत आह—कार्यामिति । न ह्यस्माकं चार्वाकाणामिव प्रत्यक्षमेव प्रमाणमिति भावः । विभज्यमानस्य नाशं प्राप्नुवतः । यदि परमाणुः स्यात्तदा सर्षपपरमाणुर्निकटे मेरुपरमाणुस्तु दूर इति युक्तं परिमाणवैषम्यं, तदभावे त्ववयवपरम्पराया उभयत्रानन्त्यसाम्यात्परिमाणसाम्यं स्यादित्याह—अनन्तेति । पारम्पर्येणावयवसंख्या यद्यप्यविशिष्टा तथापि मेरोरवयवे महत्त्वविशेषः प्रचयाख्यः संयोगो वा तादृशमहत्त्वप्रयोजकोऽस्ति न सर्षपावयव इत्याह—न चेति । यदि सर्षपावयवे मेरोरवयवे चावयवसंख्यापरम्परा तुल्या तदा मेरोरवयवे परिमाणविशेषः प्रचयो वा न सर्षपावयव इत्येव न स्याद्दूरतस्तु तत्कृतस्तयोः परिमाणविशेष इत्याह—तयोरिति । एवं चावयवयोस्तद्विशेषार्थं स्वीकार्यः परम्परायां विशेषः, स चावधीभूतपरमाणुसिद्ध्यधीन इत्यर्थः । ननु माऽस्तु परम्परायां विशेषः साक्षादवयवे त्वस्ति संख्यायां विशेषः, एवं च बहुभिरवयवैरारब्धस्य स्वल्पावयवारब्धाद्विशेषः स्यादिति चेन्न । अनवस्थायां तात्पर्यादित्येके ।

त्र्यणुकावयवस्य सावयवारब्धत्वे महत्त्वं स्यादित्यपरे ।
51.5 220 2 नापीति । ननु प्रलयस्य कीदृशमवधित्वम्? यदि यस्य विनाशस्तस्यावयवो नास्तीत्येवंविधत्वं तदा घटस्यापि निरवयवत्वापत्तिः, न च तद् दृश्यत इति चेन्न । अन्त्यावयविनाशोत्तरमवयवो नास्तीत्यभिप्रायात् । एवं च यस्यान्त्योऽवयवो निकटे स स्वल्पपरिमाणः सर्षपादिवत्, यस्य तु दूरे स महान् मेर्वादिवत्, एवं तारतम्यमादाय सर्वत्रावधेयमिति ध्येयम् । अन्त्यो ह्यवयवः सावयवो निरवयवो वा । आद्ये अन्त्यत्वानुपपत्तिः अग्रेऽवयवपरम्परायाः सत्त्वात् । तथा च न परिमाणभेदप्रयोजकं वैषम्यम् । अन्त्ये आह—कस्यचिदिति । यदि स निरवयवस्तदा स एवावधिर्न तु तन्नाशः निरवयवस्य नाशानुपपत्तेः । समवायिकारणनाशस्यासमवायिकारणनाशस्य वा नाशकस्याभावात् । द्रव्यं हि अवयवविभागादसमवायिकारणसंयोगनाशे सति नश्यति अवयवनाशे सति वा, न च निरवयवे तदुभयं संभवतीति भावः । ननु चरमावयवस्य विभाग एवाकाशादिनिष्ठोऽवधिर्भविष्यति, एवं च यस्य चरमोऽवयवो निकटे स स्वल्पः यस्य तु दूरे स महानिति शङ्कते—नापीति । तस्येति । आकाश इव सोऽवयवस्तिष्ठति न वा? न चेद्विभागानुपपत्तिस्तस्य द्विष्ठत्वात् । तिष्ठति चेत्, सावयवो निरवयवो वा? प्रथमे तदेवानवधित्वं, द्वितीये परमाणुसिद्धिः । न तिष्ठतीति पक्षेऽपि विभागोत्पत्त्यनन्तरं नाशो वाच्यः, न च निरवयवस्य नाश इति सावयवतायां तदेवानवधित्वमिति भावः । एवं चाकाशचरमावयवयोर्विभागसमवायिकारणतयाकाशसत्त्वेऽपि चरमावयवासत्त्वे कथं विभागः स्यास्यति ।

यत्किञ्चित्समवायिकारणाभावेऽपि कार्याभावादित्याशयः । ननु विभागस्यैकोऽवधिरपरस्त्वाश्रयः, एवं चावधीभूतस्य चरमावयवस्याभावेऽपि स्यात्स्यात्काशादौ विभागः, स एव चावधिरत आह—न चैकेति । विभागो द्रव्याश्रय 51.8 2206
एवेत्यर्थः । एवमप्यवधित्वेन स्वीकृतस्य सावयवत्वनिरवयवत्वाभ्यां स एव दोष इति भावः । नन्ववधिरपि चरमोऽवयवो नाङ्गीकार्यः, किन्तु कश्चिद्विभाग आकाशावधिराकाशमात्रवृत्तिरवधिर्भविष्यतीति शङ्कायामाह—किञ्चेदिति । एतादृशे विभागे मानाभाव इति भावः । वस्तुतस्तु विभागाश्रयतयाऽवयवस्वीकारे तस्य सावयवत्वनिरवयवत्वाभ्यां दोषतादवस्थ्यादिति हृदयम् ।

तार्कितमिति । तर्कानुग्राह्यं प्रमाणं वदेत्याशयः । प्रत्यक्षमेव मानमिति कस्यचिन्मतमाह—अत्रेति । स च न सावयवः प्रमाणाभावादित्याह—तस्य चेति । त्रसरेणुर्महान् चाक्षुषद्रव्यत्वात् । अत्र रूपादौ व्यभिचारवारणाय द्रव्येति । स्वमते परमाणौ व्यभिचारवारणाय चाक्षुषेति । भवतु महत एव निरवयवस्यावधित्वमत आह—अनेकेति । त्रसरेणुः सावयवः चाक्षुषद्रव्यत्वात् घटादिवदिति कथं तस्यावधित्वमिति भावः । त्रसरेणुर्महान् चाक्षुषद्रव्यत्वादित्यत्राप्रयोजकत्वमाशङ्क्याह—यदीति । दूरदूरतमादौ द्रव्यचाक्षुषताया महत्परिमाणप्रकर्षानुविधानदर्शनात्कार्ये कारणोत्कर्षस्यैवानुविधानदर्शनेन कार्यकारणभावे सिद्धे स एवानुकूलस्तर्क इति भावः । त्रसरेणुः सावयवः चाक्षुषद्रव्यत्वादित्यत्राप्रयोजकत्वमाशङ्क्याह—यदि सेति । सा चाक्षुषद्रव्यता । अनेकद्रव्यवत्त्वव्यतिरेकेण यदि चाक्षुषद्रव्य-

ता स्यान्महत्त्वव्यतिरेकेणापि स्यात्, अनेकद्रव्यवत्त्वस्य महत्त्वकारणत्वात् कारणव्यतिरेकेण कार्यव्यतिरेकनियमात्। न च तद्युक्तं महत्त्वस्य चाक्षुषत्वे कारणत्वात्। न च महत्त्वं प्रति नानेकद्रव्यवत्त्वं कारणं तत्प्रकर्षेण महत्त्वप्रकर्षदर्शनादित्यर्थः। नन्वाकाशादिपरिमाणवर्जितस्य त्रसरेणुपरिमाणस्यानेकद्रव्यवत्त्वव्यतिरेकेणापि सतः चाक्षुषताहेतुत्वं स्यादिति चेन्न चाक्षुषमहत्त्वस्य निरुपाधिसहचारेण जन्यत्वनियमात्। अनेकेति। अनेकं द्रव्यमवयवरूपं तद्वान् सावयव
52 5 224.2 इत्यर्थः। अस्मदादीति। योगिचाक्षुषतामादाय स्वमते प्रथमसाध्ये परमाणौ व्यभिचारवारणाय, द्वितीयसाध्ये आकाशादौ तद्वारणायास्मदादीति। अणुपरिमाणतारतम्यं क्वचिद्विश्रान्तमिति साध्यसिद्धौ यत्र विश्रान्तं तन्निरवयवं सिद्ध्यति, तस्य सावयवत्वे तदपेक्षया तदवयवस्याणोः सत्त्वे विश्रान्त्यभावादित्याह—अपर इति। परस्परेति। परमाणुद्व्यणुकयोः सिद्धावणुपरिमाणसिद्धिः त्र्यणुकादिषु महत्परिमाणस्यैव सत्त्वात्, अणुपरिमाणसिद्धौ च तत्तारतम्यं पक्षीकृत्य तयोः सिद्धिरित्यर्थः। असौ त्रसरेणुः। कार्येति। अनुमानप्रकारश्च तस्मादित्यादिना स्वयमेवोक्त इत्यर्थः। ननु ते महत्त्वादणव एव न भवन्ति कुतः परमाणव इत्यत आह—न रूपेति। महत्त्वे सत्युद्भूतरूपवत्त्वमेव प्रत्यक्षत्वे प्रयोजकमित्यर्थः। एवं च त्रसरेणववयवाः सावयवाः महत्त्वे सति द्रव्यसमवायिकारणत्वादित्यपि नानुमानमित्याह—तथाचेति। महत्त्वाभावादित्यर्थः। ननु यदि न तेषु महत्त्वं तदा कार्ये महत्त्वं न स्यात् कारणे महत्त्वस्याभावात्। ननु प्रचयाख्यसंयोगात्तत्

निरवयवत्वेन तस्यापि तत्राभावादिति चेन्न । बहुत्वसंख्याया अपि कारणगतायाः कार्यमहत्त्वकारणत्वादिति दर्शयति—यद्यपीति । उक्तेति । उक्तोत्तरप्रायत्वादित्यर्थः । 52.11-12 225.5
अग्रे वक्ष्यमाणस्य पूर्वमनुक्तेर्यथाश्रुतेऽनुपपत्तेः । वस्तुतस्तु पूर्वं यदनेकद्रव्यत्वमुक्तं तन्न सावयवत्वमात्रं तस्यात्मन्यपि सत्त्वात्, किं तु सावयवत्वे सति तदवयवस्यापि सावयवत्वम्, तथा च त्रसरेणोरवयवा अपि सावयवा इति लभ्यते; एवं चावयवपरम्परावत्त्वं वाच्यं, तदुत्कर्षादेव च महत्त्वोत्कर्षः, तथाचोक्तोत्तरत्वमेवेति भावः । अनेकद्रव्यैः सावयवैः ।
तस्येति । ननु त्रसरेणोरवयवाः सावयवास्त्रसरेणोर्महत्त्वादित्यत्र व्यधिकरणासिद्धिरिति चेन्न । महदारम्भकत्वस्य हेतोरग्रे वाच्यत्वात् । महत्त्वमिति । कार्यमहत्त्वं प्रत्यवयवगतं सावयवत्वं प्रयोजकमित्यर्थः । तथा च कार्यकारणभावस्यानुकूलतर्कस्य सद्भावान्नाप्रयोजकत्वमिति भावः ।
कार्यकारणभावे प्रमाणमाह—अन्यथेति । परम्पराबाहुल्येऽपि न महत्त्वमित्यर्थः । बहव इति । त्रसरेण्ववयवा बहवो द्रव्यारम्भकाः परिमाणप्रचयाजन्यमहत्त्ववद्द्रव्यारम्भकत्वात् इत्यर्थः । नातः सिद्धसाधनं द्व्यणुकद्वयमेव जगतीत्यनङ्गीकारात् द्वाभ्यां त्रिभिर्वा आरम्भ इति परं संदेहात् हेतौ च यथाश्रुतेऽप्रसिद्धिः परिमाणस्य सत्त्वात् । तुल्येति । समानपरिमाणप्रचयत्रितन्तुकचतुस्तन्तुकयोः पटयोरेकस्याधिकपरिमाणत्वे बहुत्वसंख्यैव प्रयोजिकेत्यर्थः । ते चेति । विभज्यन्ते नश्यन्तीत्यर्थः, न तु विभागवन्त इत्यर्थः । तत्र द्रव्यत्वादेरेव हेतुत्वसंभवेन सावयवत्वपर्यन्तानुसरणवैयर्थ्यात् । सावयवत्वसाधकानुमाने प्रयोजकतामपाकरोति—विपक्ष इति । कार्यमहत्त्वं प्रति अवयवसावयवत्वस्य हेतुतया तत्रैव

विपक्षबाधकस्य पूर्वमुक्ते द्वितीयानुमानेऽपि च विपक्षबाधकमुक्तं पूर्वं संख्याया महत्त्वकारणतया कथनात् । तृतीयानुमाने तु विभागसाधके विनाशसाधके वा तदनभिधानात् ।
53.2 227.6 ननु द्व्यणुकावयवा अपि सावयवा भवन्त्वत आह—तदिति । बाधकादिति । अनवस्थाप्रसङ्गलक्षणादित्यर्थः । ननु द्व्यणुकावयवाः सावयवाः द्रव्यारम्भकत्वात् मूर्तत्वादित्यादीनां सत्त्वेन कथं प्रमाणाभाव इत्यत आह—द्रव्येति । अनुकूलतर्को नास्ति प्रतिकूलश्च तर्कोऽस्तीति कथं व्याप्तिग्रह इत्यर्थः । तस्मादिति । ननु समव्याप्तिसिद्धिः किमर्थमभिहिता सावयवत्वसाधने कार्यत्वव्याप्तेरेवोपयोगादिति चेन्न । यत्र कार्यत्वं नास्ति तत्र सावयवत्वं नास्तीति सावयवत्वनिवृत्तौ तथा व्याप्तेरुपयोगात् व्यापकनिवृत्त्यैव व्याप्यनिवृत्तेः व्याप्यनिवृत्तावपि व्यापकनिवृत्तेरभावात् । व्यवच्छिनत्तीति । परमाणुलक्षणा नानित्येत्यर्थः । एतावतापि प्रमाणं नोक्तमित्यत आह—येयमिति । प्रत्यक्षमेव प्रमाणत्वेनाभिहितमिति भावः । व्यतिरेकमुखेन स्थैर्यादि स्पष्टयति—न हीति । लोष्टादिनिपातेन यथा जलादि नश्यति न तथा पृथिवीत्यर्थः । न चेति । पृथिव्यां पतितं द्रव्यमधो न गच्छति जले तु गच्छतीत्यर्थः । पूर्वामिति । जलादौ पृथिवीपाते यथा जलादीनां पूर्वावस्थितिरन्यथा भवति न तथा पृथिव्यां जलादिपात इत्यर्थः । न चेति । यथा पृथिव्यां कम्बुग्रीवादयः सन्ति न तथा जल इत्यर्थः । अत इति । जलादौ स्वपरजातौ व्यञ्जकाभावेनाभाव इत्यर्थः । ननु घटादि मुद्गरादिपातेन नश्यत्येव तृणादीनामधोगतिप्रतिबन्धो जलेन क्रियत एव प्रचुरतरधारापाते मृदुपृथिव्याः

पूर्वावस्थितिरन्यथा भवतीति चेन्न। स्थैर्यपदेन निबिडसंयोगस्य विवक्षितत्वात्तस्य च पृथिवीमात्रवृत्तित्वात्। गतिप्रतिबन्धश्च स्वाधिकगुरुत्वाश्रयस्य, तृणादि तु न तथा। मूर्तविरोधित्वं च स्वाधिकगुरुत्वाश्रयपतनप्रतिबन्धकत्वम्, एकत्र गतिमात्रमपरत्र तद्विशेषः पतनमिति विवक्षितत्वात्। ननु शरीरेन्द्रियविषयभेदादित्येव किं नोक्तमत आह—एतेनेति। प्रयुज्यमानस्य संज्ञापदस्य शब्दाधिक्यादर्थाधिक्यमिति न्याये नात्र तात्पर्यमिति भावः। पृथिवीत्वं घटादौ न शरीरत्वेन्द्रियत्वे, ते च जलीये शरीरे इन्द्रिये च न पृथिवीत्वं, पार्थिवे शरीरे इन्द्रिये च द्वितयमपीति जातिसांकर्याच्छरीरेन्द्रियत्वयोर्न जातित्वमित्याह—प्रथमेति। तत्रापि इति। साक्षात्क्रियमाणतया भोगसाधनस्यैव विषयतयाऽत्र शरीरभावः,। अहं ब्राह्मण इत्यादिसाक्षात्कारानन्तरं सुखाद्युत्पत्तेरभावादेरपि विषयतया तद्वृत्तेः कथं जातित्वमित्यर्थः। समवायादेस्तु प्रत्यक्षत्वाभावेनाविषयतयाऽत्रोपेक्षेति भावः। तस्मादिति। भोगः स्वसमवेतसुखदुःखसाक्षात्कारः, स यदवच्छिन्न आत्मनि तदन्त्यावयवि शरीरमित्यर्थः। अत्रान्त्यपदं करादिवारणाय तस्य शरीरारम्भकतयाऽन्त्यावयवित्वाभावात् तदवच्छेदेनापि भोगस्य जायमानत्वाच्चेति भावः। ननु यदवच्छिन्न आत्मनि ज्ञानमित्याद्येव कथं नोक्तमिति चेन्न। विचारस्य वर्द्धमानेन्द्रावनुसर्तव्यत्वात्। शरीरेति। अतीन्द्रियमित्याद्युक्तौ चक्षुर्घटसंयोगे याति, तदर्थं शरीरसंयुक्तमिति। अतीन्द्रियपदानुपादाने आलोके याति तस्यापि कदाचिच्छरीरसंयुक्तस्य साक्षात्प्रतीतिसाधनत्वात्। परमाणुवारणाय साक्षादि-

इत्यादि अतीन्द्रिये शरीरसंयुक्तेऽपि तस्मिंस्तदभावात् ।
54.14 232.2 प्रतीयमानतयेति । साक्षात्क्रियमाणतयेत्यर्थः । अन्यथातीन्द्रिये धर्मादावतिव्याप्तेः । लक्षणेति । लक्षणीभूतो य उपाधिरूपो धर्मस्तं प्रवृत्तिनिमित्तमाश्रित्यैताः संज्ञा इत्यर्थः । त्रिविधं चेति चकारस्यार्थमाह—च इति । तावता किमित्यत आह—वाय्वादिभ्य इति । चतुर्विधप्राणस्य सत्त्वात् । एकविधं शब्दस्यापि साक्षात्क्रियमाणतया भोगसाधनत्वेन विषयत्वात् । अनेकेति । द्विविधं शरीरं पृथिव्यामेव, जलादौ त्वयोनिजमेवेत्यर्थः । कर्मधारयं वारयति—देवानामिति । अत्र प्रमाणमाह—श्रूयते हीति । ननु देवादिशरीरं योनिजं शरीरत्वात् अस्मदादिशरीरवत् । न चाप्रयोजकत्वं कारणं विना कार्योत्पत्तेरसंभावितत्वादित्याह—नन्विति । अनुमाने व्यभिचारमाह—शरीरत्वस्येति । एवं च शरीरमात्रं प्रति न योनिः कारणमिति भावः । ननु देवादिशरीरं योनिजं सर्वथाऽस्मच्छरीरसदृशत्वादत आह—संस्थानेति । सर्वथा सादृश्यमस्मदादिशरीरेण तत्र नास्तीत्यर्थः । तदेव दर्शयति—त्रिदशा इति । किञ्चित्सादृश्यं तु न योनिजत्वनियामकम् अप्रयोजकत्वादित्याह—किञ्चिदिति । यथा किञ्चित्सादृश्यसत्त्वेऽपि कश्चिद्गौः कश्चिद्गवयस्तथा कश्चिद्योनिजः कश्चिदयोनिजः स्यादित्यर्थः । अप्रयोजकेनापि साध्यसिद्धौ गवयो गौः गोवृत्तिधर्मवत्त्वादित्यपि स्यादिति भावः । देवादिशरीरं योनिजं सर्वात्मना मनुष्यशरीरसदृशत्वाद्गवादिशरीरवदिति चानुमानं न घटते दृष्टान्तासिद्धेरित्याह—न चेति । तत्र साध्यत्वेऽपि हेत्वभावेन साधनवैकल्येन न दृष्टान्ततेति भावः । यद्वा, सर्वात्मना सादृश्येन योनिजत्वव्याप्तिग्रहान-

न्तरं तथानुमेयं, व्याप्तिग्रहश्च न मनुष्यादौ तत्र तदभावा-
दित्याह—न चेति । एतेन व्यापकव्यभिचारस्यादोषत्वा-
त्कथं तदुपन्यास इत्यपास्तम् । अयोनिजशरीरसि-
द्धिमुपसंहरति—तस्मादिति । तत्कर्म । तन्नान्तरीय- 56.2 235.10
कतया भोगसमर्पकतया । तदेतदिति । तादृशो
धर्मोऽस्ति येन गर्भवासाद्यनुभवो न भवतीत्याहेत्यर्थः । ननु
परमाणुभिः कथं शरीरारम्भः साक्षात्परम्परया वेत्यत
आह—सूक्ष्मेति । तदेतदिति । परम्पराकारणत्वमित्य-
र्थः । ननु मशकादीनां सुखमप्यनुभवतां कथं नरकपीडा सु-
खासंभिन्नदुःखस्यैव नरकत्वादत आह—नारकिणामिति ।
एतद्दंशादिना नारकिणां नरकपीडा भवतीत्यर्थः । ननु
क्षुद्रजन्तव एव शरीराणीति कथं भेदनियता षष्ठीत्यत आह-
क्षुद्रेति । क्षुद्रजन्तुपदेनावयवा गृह्यन्ते आत्मा वा, तथाच
षष्ठ्युपपद्यत एवेत्यर्थः । संस्थानसंस्थानिनौ अवयवावय-
विनौ । इतोऽप्ययोनिजं शरीरमङ्गीकर्तव्यमित्याह—न हीति ।
अपि च नारकिणां न योनिजं शरीरं तत्पित्रोरपि हि नार-
कित्वं वाच्यं, न च तयोस्तथात्वे सुखं संभवतीत्याह—नापीति ।
स्वर्गेऽपीति । आगमिकत्वस्योभयत्र तुल्यत्वादित्यर्थः ।
द्विविधत्वामिति । देवादिशरीरस्यापि कारणजन्यत्वादि-
त्यर्थः । शरीरभेदतया शरीरविशेषतया । अत्रैव शरीर एव ।
अतीति । तेषामन्तःसंज्ञा ज्ञानम् अतिमन्दा अलक्ष्या इति
ज्ञानावच्छेदकत्वेनाज्ञानाल्लौकिकैस्तेषु शरीरान्तर इव चेत-
नाधिष्ठितत्वं न विवक्ष्यते इति ग्रन्थकारोऽपि तथैव गत
इत्यर्थः । विषयत्वविवक्षाहेतुमाह—प्रायेणेति । विवक्षाविशे-
षस्यैवं निरूपणे हेतुत्वे दृष्टान्तमाह—कयाचिदिति ।

यथा विपर्ययान्तर्भूतस्य स्वप्नादेः पृथग्गणना तथा शरीरान्तर्भूतस्याप्यस्येत्यर्थः । ननु तयोरन्यत्रान्तर्भावो न कृतः प्रकृतस्य तु विषयेऽन्तर्भावः क्रियते, तत्र किं दृष्टान्ती-
57.12 238.9 कार्यमत आह—कयाचिदिति । विद्यानन्तर्भूता स्मृतिर्यथा विद्यायामन्तर्भाव्यते तथा प्रकृतेऽपीति भावः । प्रमितेरिति । अननुभवतया । कयाचिदिति । यथा गन्धादौ पाकजत्वमनुक्त्वा सौरभादि निरुक्तं, शरीरादौ द्व्यणुकादिप्रक्रममनुपेक्ष्य योनिजत्वाद्युक्तं तथा वृक्षादेः शरीरत्वमनुक्त्वा विषयत्वमुक्तम् । वचनं हि विवक्षाधीनं, सा चात्रैवमेव ग्रन्थकर्तुरिति स्वाशयः। एतत् शरीरत्वम् । प्रतिनियतेति । भोक्त्रधिष्ठानमात्रेण शरीरत्वे सिद्धे प्रतिनियतेति प्रामादिकं योगिशरीरे व्यभिचारात् । जीवनादेः प्रत्येकं हेतुता, अन्यथा वैयर्थ्यात् । एते जीवनादयः । आध्यात्मिको वायुः प्राणवायुः । सोऽपि प्राणवायुरपीत्यर्थः । तदपि अभ्यादानमपि । वृद्धिश्च क्षतभग्नयोः विघटितविश्लिष्टयोः संरोहणं चेत्यर्थः । अत्रापि वैयर्थ्यभयात्प्रत्येकं हेतुतेत्यवधेयम् । ननु वृद्ध्यादि भवतु अभ्यादानं माऽस्त्वत आह—अन्यथेति । यथाभ्यादानलक्षणं कारणं विना वृद्ध्यादिस्तथा छेदं विनोच्छेदोऽपि स्यादित्यर्थः । नन्वदृशि कार्यकारणभाव एव किं मानमत आह—आगम इति । नर्मदातीरसंजाता इत्यादिरित्यर्थः । मनुष्यादीति । शरीरमित्यर्थः । मनुष्यादिपदं तु प्रकृताभिप्रायेण । यद्वा, गन्धादेर्हेतोरत्रैव वादिप्रत्यक्षसिद्धत्वात्तस्यैव पक्षता । क्लेदः स्वेदः, पाकः शरीरसंबन्धेन पुष्पादे रूपादिपरावृत्तिस्तेनौष्ण्यं लक्ष्यते अनुष्णात्तदनुत्पत्तेः । व्यूहो गतिः । एतावता शरीरे सर्वेषां सत्ता प्राप्यते न चैकस्य समवायिकारणतयाऽन्येषां निमित्ततयाप्युपपद्यत इत्याह—सत्यामिति ।

तथैवेति । पञ्चानां समवायिकारणत्वमस्त्वित्यर्थः । विजा- 59.2
तीयानारम्भकत्वादिवादिना हि शरीरमेव न वाच्यम् अपि 245.3
तु तुल्यन्यायतया सर्वत्र । एवं च यत्र नियमतोऽवयवद्वयमेव
द्व्यणुके तत्र विजातीयारम्भे पृथिवीजलारब्धेऽगन्धत्वं तेजो-
जलारब्धेऽरसत्वं तेजोवाय्वारब्धेऽरूपत्वं स्यात् कार्यग-
न्धादौ कारणगतस्यानेकस्य गन्धादेः कारणत्वात् तत्र च गन्ध-
रसरूपाणामेकैकत्वादित्यर्थमाह—इत्थमिति । स्थूलकार्य एव
तथा किं नोक्तमिति चेन्न । तत्र बहूनामवयवानामसंभवेन स-
जातीयस्यानेकस्य संभवात् । द्व्यणुके तु तदभावात् । ननु
कारणगुणत्वेन कारणता न त्वनेकत्वमपि तत्र प्रवेश्यं गौरवा-
दित्येकस्मादपि गन्धाद्युत्पद्यत इत्यत आह—आरम्भकत्व
इति । यदानेके गन्धादय आरम्भकास्तदा द्वितीयविलम्बान्न
सततोत्पत्तिरेकस्य त्वारम्भकत्वे स्यादेवेत्यर्थः । नन्वनेकस्या-
प्यारम्भकत्वे सततोत्पत्तिः स्यादेव स्वस्वाश्रये विद्यमाना-
नामनेकगन्धादीनां सत्त्वेन द्वितीयविलम्बाभावादित्याशङ्क-
ते—अथेति । यदि द्व्यणुकमुत्पन्नं तदा तत्रैको गन्धो जात
एव स एव च गन्धान्तरोत्पत्तिप्रतिबन्धक इति न सततो-
त्पत्तिः, अनुत्पन्ने तु द्व्यणुके समवायिकारणविलम्बादेव
विलम्ब इति नानेकारम्भकत्वे सततोत्पत्तिरिति तदेकार-
म्भकत्वेऽपि समानमित्याह—समवायीति । तस्मादेकारम्भ-
कत्वे न दूषणमिति गौरवं न प्रामाणिकमित्यर्थः । ननु दर्श-
नानुरोधिनी कल्पना दर्शनं त्वनेकजनकत्व एवेति शङ्कते—न
चेति । यत्र सजातीयकारणबाहुल्यं तत्रानेकजनकत्वेऽपि न
तत्त्वेन जनकता गौरवात् विजातीयारम्भकत्वेऽसंभवाच्चेत्या-
ह—कारणानामिति । विपक्ष इति । सततोत्पत्तेर्निरस्त-

59 12 247 5 स्यादित्यर्थः। ननु विजातीयारम्भोऽसिद्ध एवेत्यत आह—तेनेति। तेजोजलाभ्यामारम्भ उष्णत्वं वायुपृथिवीभ्यामारब्धे गन्ध उपपद्यते, विजातीयानारम्भे तु प्रतीतिरेषा बाधकं विना भ्रमः स्यादित्यर्थः। एवं चाथेत्यादिना ग्रन्थेन विजातीयस्यारम्भकत्वमित्यत्पर्यन्तं समाहितं तदपाकरोति—नेति। जलपृथिवीपरमाणुभ्यामेकद्व्यणुकारम्भे तत्र चैकेन गन्धेन गन्धारम्भे व्यञ्जकसत्त्वात्पृथिवीत्वं स्यात्, एवं स्नेहारम्भे जलत्वं स्यात्, एवं च जातिसांकर्यमित्याह—एकेनेति। सजातीयारब्धयोः पृथिवीत्वजलत्वयोरेकैकं, विजातीयारब्धे तु द्वयमिति परस्परात्यन्ताभावसमानाधिकरणयोरेकत्र सत्त्वे जातिसांकर्यमिति भावः। यदि च विजातीयाभ्यामेवारम्भस्तदा परमाणुष्वेव परस्परपरिहारो द्रष्टव्यः। एवं तेजस्त्वादावपि संकरो द्रष्टव्यः। एवकारगर्भं साध्यं सिद्धसाधनवारणायोपादत्ते—गन्धवद्भिरिति। परमाणुभिरिति प्रकृताभिप्रायेण। अन्यथा त्र्यणुकादौ व्यभिचारात्। परमाणौ व्यभिचारवारणाय कार्यत्वे सतीति। जले तदपाकर्तुं गन्धवत्त्वादिति। गन्धवत्येवेति। ननु विजातीयारम्भेऽपि द्व्यणुकस्य गन्धवत्त्वात्सिद्धसाधनमिति चेन्न। स्नेहवदनारम्भकत्वस्य साध्यत्वात् तस्य चासिद्धेः। विजातीयारब्धे तेन स्नेहवत्त्वस्यापि स्वीकारात्। ये पुनर्निर्गन्धान्यारभन्त इत्यत्र ये पुनः स्नेहवन्त्यारभन्त इत्यर्थः। निर्गन्धेति स्नेहवदित्यर्थः। गन्धवन्त्येव स्नेहवन्ति नारभन्त इत्यर्थः। एतेन द्व्यणुकानारम्भके द्व्यणुकादौ व्यभिचारोऽपि परिहृतः द्व्यणुकारम्भकत्वस्यासाध्यत्वात् स्नेहवदनारम्भकत्वस्यैव साध्यत्वात्। ननु सजातीयारम्भाभावे प्रथमानु-

मानै दृष्टान्तासिद्धिः द्वितीयेऽपि तथा सजातीयारब्धारम्भ-कत्वस्यैव दृष्टान्तत्वात्, अन्यथा न ते गन्धवन्त इत्यनुपपत्तेः। विजातीयारब्धारम्भकस्थले गन्धवतोऽपि भावादित्यत आह—न चेत्यादिना। अनियमः सजातीयाभ्यामेवारम्भ 59.23 250.2
इति नियमाभावः। अन्यथेति। विजातीयाभ्यामेवारम्भ इति स्वीकार इत्यर्थः। एवमित्यादावूह्यमित्यन्ते उक्त एव न्यायः। तथापीति। भूतान्तरसमवायिकारणकमेव कुतो न भवतीत्यर्थः। यस्य गुणो यावद्द्रव्यभावी तज्जातीयमेव शरीरं, स च प्रकृते गन्ध एवेति पार्थिवत्वनिश्चयः; अन्यथा घटेऽपि कादाचित्कजलादिधर्मसत्त्वात्पार्थिवत्वनिश्चयो न स्यादित्याह—इत्थमिति। रूपादीति। अत्र सत्यन्तं मनसि व्यभिचारवारणाय। गन्धोपलब्धिः सकरणिका क्रियात्वा-दित्यनुमानेन धर्मिणं प्रथमं साधयति—गन्धेति। तस्य संयोगाश्रयत्वेन द्रव्यत्वं साधनीयं, न चासिद्धः संयोगः साधयितुं क्षम इति प्राप्तित्वेन तत्साधयति—तच्चेति। तत् प्राप्यकारि अप्राप्तावजनकत्वादित्युक्तावजनके व्यभिचार इति जनकत्वे सतीति। तन्मात्रोक्तौ गन्धप्राप्ते गन्धज्ञानजनके दृष्टे व्यभिचार इति विशेष्यभागः। एवं च प्राप्यकारित्वे सिद्धे प्राप्त्यन्तरबाधात्संयुक्तसमवायघटकतया संयोगसिद्धिरिति भावः। पार्थिवत्वं साधयति—पार्थिवमिति। तत्र हेतुसाध-नायाह—गन्धवत्त्वमिति। प्राणिभेदेनेति। मनुष्याणां घ्राणं पार्थिवम् अन्येषामन्यथाभूतमिति वारयतीत्यर्थः। अत एवेति। वस्तुगत्या तु स्वभावविशेषोऽप्यत्र नियामकः, अन्यथाऽनभिभूतपार्थिवान्तरेण ग्रहणप्रसङ्गात्। न हि घ्राणा-तिरिक्तं सर्वं पार्थिवमभिभूतमेवेति भावः। वस्तुतस्तु यदि

गन्धाभिव्यक्तिशक्तिरस्ति पृथिव्या इत्यत्र पृथिवीपदं घ्राणपरं, किं सर्वैवेत्यत्रापि तथैव । तथाच घ्राणमात्रस्य गन्धग्राहकत्वं स्यादिति पूर्वः पक्षः अनभिभूतस्यास्तीति सिद्धान्तः ।

शरीरत्वेनैव शरीरत्वेनापि । विषयतया जनकत्वात् व्यवच्छेदानुपपत्तेः । विषयत्वमेवेति । शरीरत्वस्य तत्राभा-
62.6 255.3 वादित्यर्थः । मृत्तिकारूपा इति, न तु मृदो विकारा मृद्भिन्ना इत्यर्थः कार्यः, विषये परिगणितेष्वन्तर्भावापत्तेरित्यर्थः । द्व्यणुक एवेति । त्रसरेण्ववयवो द्व्यणुकं, तदवयवश्च परमाणुरिति भवतो मतं, तन्न । त्रसरेण्ववयवानामेव परमाणुत्वादित्याशयः । अत्र पूर्वपक्षी त्रसरेणोरपि नावयवाः किन्तु त्रसरेणुत एव कार्यमिति केषाञ्चिन्मतमपाकरोति—त्रसरेणव इति । प्रत्यक्षसिद्धा इत्यनेन त्रसरेणवोऽपि न सन्ति किन्तु चतुरणुकादिरेवायमारम्भ इति केषाञ्चिन्मतमपास्तम् ।

तदवयवसाधनाय महत्त्वं साधयति-ते चेति । रूपादौ व्यभिचारवारणाय द्रव्यत्वादिति, मनसि चाक्षुषत्वादिति । ननूद्भूतरूपवत्त्वमेव चाक्षुषत्वे प्रयोजकं तथा चाप्रयोजको हेतुरत आह—द्रव्यस्येति । अन्यथेति । कारणप्रकर्षस्यैव कार्येणानुविधानादित्यर्थः । महत्त्वे सतीति । अत्र महत्त्वमात्रमाकाशादौ व्यभिचारीति विशेष्यभागः । स्वमते परमाणौ व्यभिचारवारणाय महत्त्वे सतीति । अन्यथेति । निरवयवत्व इत्यर्थः । ननु नित्यत्वादेवाकाशादिवन्निरवयवत्वेऽपि महत्त्वं स्यादत आह—नित्यत्व इति । नित्यं द्रव्यं द्वेधा परममहत् परमाणुरूपं च । तत्राद्यस्त्रसरेणुर्भवत्येव नेत्यन्त्यः स्यादित्यर्थः । एवं च त्रसरेण्ववयवसिद्धावपि न तद-

वयवसिद्धिरित्याह—न चेति । ननु पूर्वहेतुनैवात्रापि साव- 63.14 257.11
यवत्वसिद्धिरत आह–न हीति । तथा च महत्त्वे सति रूप-
वत्त्वं पूर्वहेतुः प्रकृते सिद्ध इति भावः । ननु यदि त्रसरेणवव-
यवा न सावयवास्तदा न प्रचयाख्यः संयोगः तस्य साव-
यव एव वृत्तेः । यदि च न महान्तस्तदा महत्त्वासमवायिका-
रणं महत्त्वमपि तत्र नास्तीति कथं महदारम्भका इत्याशङ्क्य
बहुत्वसंख्यावशादेव महदारम्भकाःस्युरित्याह–यद्यपीति ।
त्रसरेणवः कार्यत्वे सतीति । आकाशादौ कार्यत्वादित्याह-उ-
च्यत इति । नन्वप्रयोजकता महत्त्वोपपत्तेर्बहुत्वसंख्यावशादेव
भावात् महत्त्वस्य प्रचयाख्यसंयोगस्य च द्व्यणुकेऽप्यभा-
वादत आह–अन्यथेति । यदि परमाणुभिरेव बहुत्वसंख्योपे-
तैर्महद्द्रव्यारम्भस्तदा घटादीनामपि तैरेवारम्भे परमाणु-
घटयोर्मध्यवर्ति कार्यं नोपलभ्येतेत्यर्थः । ननु परमाण्व-
पेक्षया महतां घटाद्यपेक्षया वा महतां नान्तरालिकत्वं, किन्तु
घटादिवत्परमाणवारब्धत्वमेवेति तेषां नोपलम्भाभाव इ-
त्यत आह—तथा चेति । अवयवसंयोगस्य रेखादिरूपत्वे
तस्य च परमाणुरूपतयाऽतीन्द्रियत्वे तस्याप्यतीन्द्रियत्वं
स्यादित्यर्थः । अत्रापीष्टापत्तावाह—तथा चेति । कम्बु-
ग्रीवादीनां घटत्वादिव्यञ्जकानामवयवसंयोगात्मकत्वादेवे-
त्यर्थः । ननु परमाणुः पूर्वावयविनमारभ्याग्रिमावयविन-
मारभते, तथा चान्तरालिककार्योपलम्भेऽपि पर्याप्तिः रेखोपरे-
खोपलम्भोऽप्यान्तरालिककार्यसंबन्धस्यैव तदात्मकत्वादि-
त्यत आह-न चेति । मूर्तानामिति । परमाणुष्वेव पूर्वव-
दग्रिमस्य समवायादित्याशयः । ननु पूर्वोऽवयवी यावत्सु
परमाणुषु वर्तते तदधिकेष्वग्रिम इति न्यूनाधिकदेशतया न

विरोधः। न हि यावद्भिस्त्रसरेणवारम्भस्तावद्भिरेव चतुरणुकार-
64.9 म्भोऽधिकपरिमाणत्वानुपपत्तेरित्यपाकरोति–न्यूनेति ।
258.8 अधिकेषु परमाणुषु पूर्वावयविनोऽभावादधिकस्य स्थितिरस्तु
पूर्वतनेषु कथं स्थास्यति पूर्वमूर्तस्य तत्र सत्त्वादित्याह–
न्यूनेति। यन्मूर्तेन समानदेशं तदमूर्तं यथा घटेन समान-
देशं कपालरूपमित्याह- तत्रापीति। नन्वन्यूनाधिकतया
समानदेशयोरेव मूर्तत्वविरोधो न तु समानदेशयोरतो न
न्यूनाधिकदेशयोर्विरोध इत्यत आह—संयोगिन्यपीति ।
एवं च न्यूनदेशस्यापि शरावादेरधिकदेशघटादिस्थितिवि-
रोधित्वात् संयोगिनीव समवायिन्यपि तथात्वमित्याशयः।
तदन्नं शरावः। यदि मूर्तयोः समवायिनि समानदेशत्वं
न्यूनाधिकदेशतया नास्ति तदा चरमतन्त्वपकर्षणे तत्समवे-
तस्याधिकदेशस्य महापटस्य नाशे न्यूनदेशस्य खण्डपटस्योप-
लम्भेन स्यादित्याह–कथमिति। प्रतिबन्धकेति । महा-
पटरूपप्रतिबन्धकाभावे विद्यमानेभ्यः संयोगेभ्यः खण्डपटस्त-
दैव जायते, न तु महापटकाले खण्डपटसत्त्वमित्यर्थः ।
आद्यादीति। आद्यतन्तौ हि द्वितन्तुकादयः सर्वे पटाः समवे-
तास्तथाच तदपकर्षणे समवायिकारणनाशात्सर्वेषां नाशे तन्त्व-
तिरिक्तोपलम्भाय तदैव पटोत्पत्तिर्वाच्येत्यर्थः । नन्विति।
अणुभिर्महद्द्रव्यारम्भे यदि घटाद्यारम्भकत्वलक्षणातिप्रस-
ङ्गस्तदा द्व्यणुकेऽपि । तथा चात्र कश्चित्परमाणुव्यावृत्तो
विशेषो वाच्यः। स्वेच्छापरिकल्पितस्तु नियमः परमाणा-
वपि इत्यतिप्रसङ्गभिया द्व्यणुकेऽपि महदारम्भकत्वं मुञ्चे-
त्यर्थः। एवं चातिप्रसङ्गभङ्गो नियमादेव भविष्यतीति पर-
माणुभिरेवास्तु त्र्यणुकारम्भ इति न द्व्यणुकसिद्धिरिति

पर्यवसन्नम् । तत्राह—उच्यत इति । ननु द्वितन्तुके पट 65.7
एवायं संख्यापकर्षस्तिष्ठति किं द्व्यणुकेनेति चेन्न । साक्षा- 2614
त्परम्परासाधारणोत्कर्षाभावस्य विवक्षितत्वात् । तत्र परम्परावयवानादायोत्कर्षसत्त्वात् । एवं च त्रिभिः परमाणुभिरारम्भे नोत्कर्षविरहः सिद्ध्यति तदपेक्षया तदुभयोर्द्वित्वैकत्वयोः सत्त्वात् । एकश्च परमाणुर्नारम्भक एव एकस्य संयोगाभावेऽसमवायिकारणाभावात् । अनेकसंख्याविरहेऽपेक्षितस्य कारणापेक्षया कार्येऽधिकपरिमाणस्य चानुपपत्तेः, एकस्य परमाणोः संयोगाभावे संयोगनाशासंभवेऽसमवायिकारणनाशाभावेन जन्यस्य नित्यत्वप्रसङ्गः परमाणोर्नित्यतया समवायिकारणनाशस्याप्यसंभवात् । एवं च परमाणुद्वयारब्धस्य द्व्यणुकस्य सिद्धिरिति ग्रन्थकार्थः । तथात्व इति । प्रचयमहत्त्वयोरिव बहुत्वस्याप्यभावादित्यर्थः । उभयथापीति । महदारम्भार्थमेव तस्य स्वीकारादित्यर्थः । ननु द्वाभ्यां परमाणुभ्यां भवतु द्व्यणुकारम्भस्त्रिभिस्तु त्र्यणुकारम्भोऽपि स्यादिति शङ्कते—न चेति । कारणकारणेन कार्यकार्यारम्भः कदाचिदित्यनियमो नाङ्गीक्रियत इत्याह—अनियमेति । महत्त्व इति । सत्यन्तं द्व्यणुके व्यभिचारवारणाय आकाशादौ कार्यत्वादिति । एतच्च द्वितीयसाध्ये प्रथमे महत्त्वमात्रस्य समर्थत्वादिति भावः । कार्यद्रव्यत्वमात्रं तु न तत्र व्याप्यं तथा सत्यवयवाविरामेऽनवस्था स्यादित्याह—न स्यादिति ।

इति पृथिवीनिरूपणम् ॥

अथेति । क्रमिकेषु पूर्वनिरूपणानन्तरमेवाग्रिमस्य सावसरत्वादित्यर्थः । सामान्येति । स्नेहादिव्यङ्ग्यमित्यर्थः । पूर्ववदिति । सम्बन्धमात्रविवक्षायां पूर्ववदेवातिप्रसङ्गा-

दित्यर्थः । द्रव्यत्वविद्गुण इति, न तु लक्षणत्वेन रूपादीना-
मतिप्रसङ्गादिति भावः । ननु शुक्लरूपवत्त्वं नाप्त्वव्यवस्था-
67 6
267.7 पकं पृथिवीतेजसोरपि सत्त्वादत आह—सहस्रश इति ।
नन्वेवं शुक्लपदं व्यर्थमिति चेन्न । अपाकजाभास्वरशुक्लरूपवत्त्व-
स्य विवक्षितत्वात् जलरूपस्य प्रकृतविशेषणद्वयवत्त्वे प्रमाण-
माह—एष इति । उक्तेति । अन्यथा तेजःसंयोगे न
परावृत्तिः स्यादित्यर्थः । परावृत्तिं विना कथं रूपान्तरो-
पलब्धिरत आह—पार्थिवा इति । औपाधिकीत्यर्थः ।
रसातिप्रसङ्गं वारयति—एतेनेति । अपाकजरसवत्त्वं लक्षण-
मित्यर्थः, माधुर्यस्य वैधर्म्यात् । ननु माऽस्तु पयसि पाकेन
विजातीयो रसः उत्कृष्टमपकृष्टं वा पूर्वमाधुर्यनाशानन्तरं
माधुर्यान्तरमेव जायत इत्यत आह—ईषदिति । तदपि
नोपलभ्यत इत्यर्थः । जलरसस्य नियमतो मधुरत्वेन रसा-
न्तरोपलब्धेरौपाधिकत्वमाह—सिन्धुभेदेनेति । अत्रोपप-
त्तिमाह—कथमिति । स्पर्शान्तरोपलब्धिरपि जले औपा-
धिकी तदन्वयव्यतिरेकानुविधानादित्याह—एवमिति ।
यथा तैलादिषु पार्थिवेषु स्नेह उपलभ्यते तथा जले नोप-
लभ्यत एव । तथाच स्नेहो जलगतो भवत्येव न किन्तु
पृथिवीगतः, तत्त्वेऽपि न पृथिवीविशेषगुणः तद्विशेषगुणस्य
रूपादिन्यायेन सकलपृथिवीव्यापकत्वात्, किन्तु पृथि-
वीत्वव्याप्यो जातिविशेष एवेति कस्यचिन्मतमाह—
अत्रेति । अतिशयो गुणकर्मैकनियतस्तत्र कर्मत्वं बा-
धितमेवेति गुणत्वमित्याह—तद्वदिति । ननु नायं नि-
यमो द्रव्येऽप्यतिशयप्रतीतेरत आह—न चेति । भवन्ती
तु प्रतीतिः परिमाणातिशयगोचरैव भवतीत्यर्थः । ननु

स्नेहो गुणः सातिशयत्वादिति कर्मणि व्यभिचारीत्यत
आह—सामान्यविशेषतया चेति । तथाच न सामान्य- 68.15 271.6
मिति प्रकृते साध्यमित्यर्थः । गुण एवेति । कर्मत्वस्या-
संभवादित्यर्थः । किञ्च परमाणुपर्यन्तं स्नेहस्तिष्ठति, न च
जातिरूपत्वे तदुपपद्यते पृथिवीत्वव्याप्यजातेः परमाणाव-
भावादित्याह—किञ्चेति । व्यवस्थापकेति । घटत्वादेस्तु
कम्बुग्रीवादि व्यञ्जकमित्यर्थः । व्यञ्जकं विनापि क्षीरत्व-
न्यायेन परमाणुषु स्थास्यतीत्याशङ्कते—क्षीरत्वेति । तस्य
क्षीरत्वस्य । परमाणुषु क्षीरत्वाभावमुपपादयति—पाकजेति ।
अयमाशयः । क्षीररूपादिसजातीया रूपादयो वा परमाणौ
क्षीरत्वव्यञ्जकास्तद्योग्यता वा ? नाद्यः, पाकेन विद्यमा-
नानां तेषां नाशे क्षीरत्वस्य तत्रासत्त्वप्रसङ्गात् व्यञ्जका-
भाववति व्यङ्ग्यावृत्तेः । न चेष्टापत्तिः, जातेः सामयिकवृत्त्य-
नङ्गीकारात् । नान्त्यः, तादृशयोग्यतायाः सर्वत्र सत्त्वेन
सर्वपार्थिवपरमाणुषु क्षीरत्वापत्तेः । न चेष्टापत्तिः, तदारब्ध-
सर्वकार्याणां क्षीरत्वापत्तेः क्षीरारब्धस्य क्षीरत्वनियमात् ।
ननु यथा परमाणौ न क्षीरत्वं किन्तु द्व्यणुकादौ तथा
स्नेहोऽप्यस्त्वित्याह—द्व्यणुकादाविति । क्षीरारम्भकेषु
परमाणुषु तथा रूपादयस्तिष्ठन्ति यथा तदारब्धेषु क्षीरत्वं,
न त्वेवं स्निग्धारम्भकेषु । यदि च कश्चिद्गुणविशेषो रूपादि-
भिन्नस्तिष्ठति तदा तेनैव स्निग्धव्यवहारोपपत्तौ किं
जात्येत्याह—तदिति । यदि रूपादिमत्परमाण्वारब्धेष्वेव
स्नेहस्तदा पृथिव्यादिमात्रे स्यादित्यभिप्रेत्याह—न हीति ।
ननु घृतत्वादाविव रूपादिविशेषा एव परमाणुवृत्तयो भवि-
ष्यन्ति व्यञ्जका इत्यत आह—न चेति । न हि घृतत्वादि-

वैयधिकरण्यं तस्य किन्तु सामानाधिकरण्यमेव । तथाच घृता-
दिपरमाणुवृत्तीनां तेषां घृतत्वादिव्यञ्जकत्वमेव न घृतादिवृत्ति-
स्नेहव्यञ्जकत्वं घृतस्नेहादिपरमाणुषु विसदृशत्वाच्चेत्यर्थः ।
69.10 273.7 ननु धारणैक्यं व्यञ्जकमत आह-न चेति । अत एवेति । यतः
क्षीरप्रभवस्यैव घृततैलत्वे घृतव्यपदेशमुपपादयति-रसेति ।
स्नेहस्य गुणत्वमुपसंहरति-तस्मादिति । जले स्नेहो नास्ति
अनुपलब्धेरिति पूर्वोक्तं दोषमपाकरोति-न चेति । न हि जले
स्नेहो नोपलभ्यत एव किन्तु घृते उपलभ्यमानादपकृष्ट उपल-
भ्यते, यथा समानपरिमाणसुवर्णापेक्षयापकृष्टं गुरुत्वं लोष्टा-
दावित्यर्थः । प्रत्यक्षमुक्त्वा तत्र कार्यं प्रमाणमाह—अन्यथे-
ति । उभयकार्यः संग्रहो जलाद्भवन्नुभयमपि तत्र व्यवस्था-
पयतीत्यर्थः । ननु घृतादौ संयुक्तसमवायेन जलस्य स्नेह
इति भवत आशयः, स माऽस्तु नैमित्तिकेनैवोपपत्तेरि-
त्याह—तथापीति । संयुक्तसमवायेनैवोपलभ्यत इत्यु-
पसंहरति—तस्मादिति । पिण्डीभावेनापीति ।
न च पिण्डीभावो जलस्येत्यर्थः । तुशब्द इति । व्यवच्छे-
दासंभवेन मुख्यार्थानुपपत्तेरित्यर्थः । कार्यमित्यत्र संबन्ध्य-
पेक्षायामाह—ता इत्यत्रेति । पृथिव्यामिति । प्रकारत्र-
येण परार्थत्वाकथनायेदमभिहितं पूर्ववदित्यर्थः । जलीयशरी-
रस्याप्रत्यक्षतया तत्र प्रमाणमाह—आप इति । सर्वासां
शरीरारम्भकत्वाभावात्क्वचिदित्युक्तम् । अनुकूलं तर्कमाह-
द्रव्यस्येति । इष्टापत्तिमपहन्ति—न त्वेवमिति ।
योनिजत्वे बाधकमाह-शुक्लेति । विप्रकृष्टत्वं दूरस्थत्वम् ।
ननु जलेन कथं पार्थिवारम्भ इत्यत आह—विजाती-
यानामिति । आरम्भकत्वं समवायिकारणत्वं, निमित्ततया

त्त्वेकं प्रत्ययपरस्य सहकारित्वं न विरुद्धमिति भावः । ननु करकादिः कथमाप्यः सांसिद्धिकद्रवत्वविरहादत आह-आप्यत्वेऽपीति । ऊष्मविशेषाभावसहकृतमदृष्टं विलय- 72.7
नप्रतिबन्धकम् । द्रवत्वं तु सांसिद्धिकमेव न तु नैमित्तिकमि- 280.6
त्यर्थः ।

इति जलनिरूपणम् ।

समुच्चयासंभवादाह—त्वर्थं इति । शुक्लपदवैयर्थ्यमाशङ्क्याह—तेनेति । न देयमेवेत्यर्थः । सूत्रादुत्पत्तिरूपा सिद्धिर्न संभवतीत्यत आह—प्रसिद्धा इति । स्वरूपकथनप्रयोजनमाह—पच्यमानेति । उपाध्यन्वयव्यतिरेकाभ्यां लोहिताद्युपलम्भ औपाधिक इत्यर्थः । ननु शुक्लत्वप्रतीतिरेवौपाधिकी भवत्वित्याशङ्क्याह—न चेति । स्वरूपसंक्रान्तिर्हि तद्रूपाभिभवोत्तरं स्यात्, न च जलरूपमभिभावकम् अन्यथा जलप्लावितनीलादौ श्वेतत्वं प्रतीयेतेत्यर्थः । एवकार इति । अनुपलम्भमात्रं नाभावसाधकम् अपि तु योग्यानुपलम्भः, स च प्रकृते नास्ति अयोग्यत्वात् । प्रमाणं तु तत्र तेजस्त्वमेवेत्यर्थः । अप्राप्यकारीति । विषयासम्बद्धमेव ग्राहकम् । यदि प्राप्यकारि स्यात्तदा रसनादिवदधिष्ठानसंबद्धं गृह्णीयात्, न चैवं गोलकासंबद्धस्य ग्रहणादित्यर्थः । पृथ्वीति । यदि प्राप्य गृह्णीयात्तदा स्वल्पस्याधिकदेशावच्छेदेन प्राप्त्यभावादधिकदेशावच्छिन्नं न गृह्णीयात् न वाधिष्ठानासंबद्धं स्वसंबन्धे स्वाधिष्ठानसंबन्धस्यापि प्रसङ्गादित्यर्थः । न खल्विति । यावद्दूरं संबन्धस्तावदेव च्छिनत्ति न तदधिकं, तथा प्रकृतेऽपि स्वल्पभागस्यैव ग्रहणं स्यादित्यर्थः । शाखेति । गतिक्रमेण प्राप्यग्रहणे हि क्र-

74.11 मिकं ग्रहणं स्यात् तथा चानुभवविरोध इत्यर्थः । काचेति ।
286.9 गत्वा प्राप्य ग्रहणे व्यवधाने ग्रहणं न स्यात् व्यवधा-
यकेन प्रतिबन्धे गमनासंभवेन प्राप्त्यसंभवादित्यर्थः ।
न तैजसमिति । प्राप्यकारित्वानुरोधेन हि गोलातिरिक्तं
चक्षुरङ्गीक्रियते गोलकस्य चन्द्रादिप्राप्त्यसंभवात् । अप्राप्य-
कारित्वे तु गोलकमेव चक्षुः, न च प्रसन्नान्धानुपपत्तिः अदृ-
ष्टविशेषसहितस्य तत्त्वादित्यर्थः । अधिष्ठानेति । आधेय-
संबद्धस्याधारसंबन्धानियमेन यथा शरावासंबद्धग्रहेऽपि प्र-
दीपः प्राप्यकारी तथा चक्षुरपीत्यर्थः । पृथुतरेति । एवं च
यावति दूरे संबध्यते तावदेव गृह्णातीत्यर्थः । यद्यप्यनिर्गतं
गोलकपरिसमाप्तमेव चक्षुस्तथापि निर्गतं महद्भवतीति भा-
वः । तद्वत् प्रदीपवत् । तेजसः प्राप्तौ क्रमाज्ञानं दृष्टान्तेनाह—
यादीति । यदैव चूडावलम्बनं तदैवालोक इति यथा भ्रमस्त-
थैव प्रकृतेऽपीत्यर्थः । चक्षुर्बाह्यालोकाभ्यामारब्धेन चक्षुषा
तावदर्थसंसृष्टेन युगपत्तावदर्थग्रहणमिति केषाञ्चिन्मतमाह-
केचित्त्विति । पृष्ठेति । एवं हि तस्य चक्षुषः पृष्ठभागेऽपि
सत्त्वात्तत्रस्थमपि गृह्येतेत्यर्थः । ननु ऋजुदेशस्थमेव गृह्यत
इति न तदुपलम्भ इत्यत आह—इन्द्रियेति । न ह्यार्जवा-
वस्थानं स्वत उपयुज्यते किन्तु प्राप्तिद्वारा, सा चेत्पृष्ठदेश-
स्थेनाप्यस्ति तदार्जवं विनापि गृह्येतेत्यर्थः । स्फटिकादी-
ति । तथा सच्छिद्रता तेषां यथा नातिप्रतिबन्ध इति
भावः । प्रसादस्वभावतया सच्छिद्रताविशेषशालितयेत्यर्थः ।
येषामिति । कुड्यादिव्यवहितमित्युपलक्षणम् । पृष्ठदेशस्थ-
मपि गृह्णीयादित्यपि योज्यम् । ननु प्रतिबन्धकस्य भित्त्या-
देः सत्त्वान्न व्यवहितग्रहणमित्यत आह—न हीति । भि-

त्यादिर्हि प्राप्तिविघातद्वारा प्रतिबन्धाति—न च प्राप्तेरका-
रणत्वे तदुपपद्यते न च स्वत एव प्रतिबन्धकत्वं भित्त्यादेः,
अनन्तरालेऽपि भित्त्यादिसत्त्वे कार्याभावप्रसङ्गात्, न चा-
न्तरालवर्तिनः प्रतिबन्धकत्वं स्वल्पपरिमाणस्य कुड्यादेर-
न्तराले सत्त्वे महापरिमाणस्य गजादेरग्रहणप्रसङ्ग इति
भावः । ननु भित्त्यादिव्यवहितस्य चक्षुर्ग्रहणायोग्यत्वभावान्न
गृह्यते न तु प्राप्त्यभावादिति शङ्कते—योग्यमिति । अ- Ben 75.12
योग्यत्वं स्थैर्यपक्षे नोपपद्यते—तथा च कदाचिद्गृहीतस्य
तस्य भित्त्यादिव्यवधाने ग्रहणापत्तेः, नहि तद्दशायां तद-
योग्यम्, एकस्यैव योग्यायोग्यत्वयोरभावादित्याह—स्थै-
र्य इति ।

ननु प्रतिक्षणं भिन्ना भावास्तथा च ग्रहणदशायां य
आसीत्स योग्योऽग्रहणदशायां त्वयोग्य इत्यत आह—क्षणि-
कत्वेऽपीति । भवतु क्षणिकतापक्षस्तत्रापि सहकारिणां
परस्परमासत्तिरपेक्षितैव, न हि विभक्तयोर्बीजपृथिव्योरङ्कुरा-
रम्भकत्वं, तथा च घटचक्षुषोरपि सहकारिणोर्ग्रहे जनयि-
तव्ये परस्परम् । प्रत्यासीदतां प्रत्यासत्तिभाजाम् । अति-
शयः कार्यम् । अप्रत्यासीदन्तः अप्रत्यासन्नाः । सहकारि-
कारणानि । भावान् अपरसहकारिणः । अतिशाययन्ति
फलोपहितान् कुर्वन्ति । एकं कारणं प्रत्यासन्नमेवापरं
कारणं फलोपहितं करोति न त्वन्यथेति भावः । निरन्तरो-
त्पादोऽद्रव्ययोरपि सहकारिणोः, संयोगस्तु द्रव्ययोरेव,
अन्यथा तु प्रत्यासत्त्यनन्तरं यथा दाहे जनयितव्ये हस्तम-
वयभावयोरित्यभिप्रेत्याह—प्रत्यासत्तिश्चेति । न चेति ।
व्यवधानस्य प्रत्यक्षसिद्धत्वादित्यर्थः । तत इति । गच्छच्च-

क्षुः प्रतिक्षणं भिन्नमुत्पद्यमानं किञ्चिद्घटेनाऽव्यवहितमुत्प-
द्यते घटश्च तेन, तयोत्पन्नाभ्यां ताभ्यां कार्यमिति बौद्ध-
दर्शनं, गत्वा चक्षुर्घटसंयुक्तं भवतीति न्यायमतं, तत्र क्षणिक-
तानिरासेन न्यायमतमग्रे स्थापनीयमिति भावः । तृणादि-
76.8 संग्रहायाह—काष्ठेनेति । जातीति । एवं च तज्जातीयस्य
सर्वस्य सहजमूर्द्ध्वज्वलनमेवेत्यर्थः । विक्लेदनं स्पर्शभेदः ।
आहरणमाहार इत्यत्र भुक्तस्येत्यनेन सामानाधिकरण्यानु-
पपत्तेराह—आह्रियत इति । रसादेः परिणामान्तरा-
भावादाह—त एवेति । तथाच न तत्पुरुषोऽपि तु कर्म-
धारय इत्यर्थः । यद्यपि सुवर्णं पार्थिवं गुरुत्वादित्यनुमानं
न संभवति जले व्यभिचारात् । नापि न तैजसमिति साध्यं
संदिग्धासिद्धेः । उपष्टम्भकभागस्य वा गुरुत्वं तत्र संयुक्तस-
मवायेन प्रतीयते तत्रैव वा तिष्ठतीति संदेहात् । तथापि
सुवर्णं पार्थिवं नैमित्तिकद्रवत्वाधिकरणत्वादित्यनुमानं, न
चात्राप्यसिद्धिरद्रुतभागस्याप्रतीतेरित्याह—यद्यपीति । ननु
यदि सुवर्णद्रवत्वं पार्थिवं स्यात्तदात्यन्ताग्निसंयोगेनोच्छिद्ये-
तेत्यत आह—न चेति । तथेति । यत्पार्थिवं द्रवत्वं तदत्य-
न्ताग्निसंयोगादुच्छिद्यत इति व्याप्तेरदर्शनादनिश्चयादि-
त्यर्थः । पक्षदृष्टान्तयोः सतोः परस्परविलक्षणयोर्हेत्वोर्विरो-
धस्तु विशेषविरोधो न दूषणं येन दृष्टान्तेऽग्निसंयोगेनोच्छि-
द्यमानस्य पक्षे वानुच्छिद्यमानस्य सत्त्वाद्दोषः स्यात् । अवा-
न्तरविशेषावच्छिन्नयोरसमानधर्मत्वेऽपि हेतुतावच्छेदकावच्छि-
न्नस्य समानधर्मत्वात् । अन्यथा महानसे व्यञ्जनसहचरित-
स्य पर्वते तदसहचरितस्य सत्त्वात्तत्रापि विरोधः स्यादि-
त्याह—विशेषेति । ननु विशेषविरोधोदाहरणं तर्हि किमि-

त्यत आह—तथेति । यथा विशेषविरोधो दूषणं तथाग्रे 77.10
वक्ष्यामो न त्वेवमादिरित्यर्थः । सुवर्णं तैजसम् अत्यन्ता-
ग्निसंयोगेऽप्यनुच्छिद्यमानद्रवत्वाधारत्वादिति प्रतिपक्षो न
संभवति सपक्षात्सौरादितेजसो विपक्षाच्च घृतादेर्व्यावृत्तत्वे-
नासाधारणत्वादित्याह—न चेति । आस्त इति । तथाऽप्रती-
तेरित्यर्थः । विरुद्ध इति । व्यभिचारीत्यर्थः । साध्यासहच-
रितत्वेन विरोधासंभवादिति बोध्यम् । स्नेहेति । जलत्वे
द्रवत्वदशायां संग्रहः स्यात् स्नेहस्यापि विद्यमानत्वादित्यर्थः ।
पूर्वोक्तानुमानमाशङ्क्याप्रयोजकत्वेन परिहरति—न चेति ।
स्वभावो यद्यन्यत्र स्यात्तदोर्ध्वज्वलनमप्यन्यस्य स्यादिति
पृथिवीस्वभावो नैमित्तिकद्रवत्वं कथमपृथिव्यामत आह—न
चेति । स्वभावे समव्याप्तिदर्शनेन सकलपृथिव्यां तत् स्यादि-
त्यर्थः । ननु मास्तु पृथिवीमात्रस्य स्वभावो घृतस्य तु
स्यात्तथापि न तेजसि संभव इत्यत आह—न चेति ।
एवं हि सर्पिर्मात्रे स्यान्न तु लाक्षादौ तस्य ततो भिन्नजा-
तीयत्वादित्यर्थः । एवं च यथा कारणवशादन्यत्राप्युत्पद्य-
मानेन कर्मणा न पृथिवीत्वं तथा नैमित्तिकद्रवत्वेनापीत्याह—
तस्मादिति । अपि च सुवर्णमपार्थिवम् असति विरोधि-
द्रव्येऽत्यन्ताग्निसंयोगेऽप्यनुच्छिद्यमानरूपवत्त्वात् जलवदि-
त्यनुमानमित्याह—किञ्चेति । उपष्टम्भकपार्थिवभागे च
न व्यभिचारः तत्र तस्यैव विरोधितयाऽसति विरोधिद्रव्य
इति भागाभावादित्याह—तेनैवेति । अग्निसंयोगाद्रूपान्तरं
नोत्पद्यतेऽपि तूपाधिवशात्प्रतीयत इत्याह—तन्निमग्नीभूतेति
अभिभवादेव भास्वररूपानुपलम्भो न त्वभावादित्यभा-
स्वररूपवत्त्वमतैजसत्वसाधकमसिद्धमित्याह—असिद्धेरिति ।

78.20 अभिभवकृतं भास्वरत्वानुपलम्भमुदाहरति—न हीति । प्रसङ्गाद्विचारयति—अथेति । तद्वदिति । सुवर्णस्य च प्रत्यक्षत्वादित्यर्थः । निशीत्यभिभावकतेजोऽभावेनाभिभवाभावप्रतिपादनाय । तथा च तत्रानुद्भवादेवानुपलम्भो न त्वभिभवादित्याशयः । नन्वभिभूतरूपमपि द्रव्यं नोपलभ्यत इत्यत आह—अभिभवेऽपीति । दृष्टान्तासिद्धिमाह—न हीति । तस्य उल्काप्रकाशस्य । उल्काप्रकाशो गृह्यते विविच्य तु भूयः सादृश्यान्मणीवन्न गृह्यत इत्याशयः । कथमिति । यदि तैजसमित्यर्थः ।

इति तेजोनिरूपणम् ।

पृथिव्यादिक्रमेण निरूपणे बीजमाह—प्रतिनियतेति । कालाद्यपेक्षया प्रतिनियतेन्द्रियग्राह्यगुणाश्रयतया पृथिव्यादयः प्रधानं, तेषु चाधिकगुणाश्रयतया पूर्वपूर्वं प्राधान्यं, वाय्वाकाशयोस्तु वायुप्राधान्यं त्रिविधकार्यवत्तयेति ध्येयं, मनस्तु न प्रतिनियतमिन्द्रियं सर्वग्राहकत्वादित्याशयः ।

अप्रयोजकत्वशङ्कायामाह—पाकजत्वं हीति । वायुस्पर्शोऽपाकजोऽपार्थिवस्पर्शवत्त्वादित्यत्राप्रयोजकत्वे हेतुसत्त्वेऽपि साध्यं मास्तु, तथा च पाकजत्वं भवत्वित्यायाति, तत्तु न, तत्सत्त्वे तद्व्यापकस्य कठिनतरत्वादेः प्रसङ्गात् । पृथिवीरूपादावपि पाकजे विशेषान्तरस्य दर्शनेन विशेषान्तरस्य पाकजत्वव्यापकत्वात्, तथा च तन्निवृत्त्या वायुस्पर्शे पाकजत्वनिवृत्तिः । यदि तन्निवृत्तावपि पाकजत्वं तिष्ठति तदा संख्यादयोऽपि पाकजा भवेयुः । एवं च सर्वत्राव्यभिचारेण विशेषान्तरनिवृत्त्या वायावपि तथात्वे प्रकृतव्याप्तिसिद्धिरित्यर्थः । तदविरहिणि स्वाविरहिणि । एवं च यत्र विशेषा-

न्तरं तिष्ठति पार्थिवरूपादौ तत्र व्यावर्तिकया व्यापकनिवृत्तेरभावाद् व्याप्यं पाकजत्वमपि तिष्ठति वायौ तु न व्यापकनिवृत्तेरिति भावः। विशेषान्तरनिवृत्त्या चेदत्र पाकजत्वं निवृत्तं तदा पार्थिवस्पर्शत्वापाकजत्वयोर्व्याप्तिरागतेत्याशयः। द्रव्यारम्भेति। संयोगं विना किमसमवायिकारणं स्यात्, 80.8
संख्यादि विनारब्धे संख्यादि न स्यादित्यर्थः। एवं चारब्धद्रव्यस्य संख्यादिनियमेन तज्जनकतयारम्भकेऽपि तदिति भावः। विभागेनेति। परमाण्वारब्धद्रव्यस्य समवायिकारणनाशासंभवेनासमवायिकारणनाशादेव नाशो वाच्य इत्यर्थः। परत्वेति। यदावच्छिन्नपरिमाणवत्ता तदा सर्वत्रासत्त्वेन दूरत्वादूरत्वयोः संभवेन संयुक्तसंयोगाल्पीयस्त्वभूयस्त्वसंभवे तत्कार्यं परत्वाद्यावश्यकमित्यर्थः। एतद्रूपवदिति। एतदित्यादि पक्षविशेषणमहिम्ना न पृथिव्यादिनार्थान्तरता। साध्येऽभिघातपदेन संयोगो गृह्यते। अन्यथा स्पर्शवदित्यादिवैयर्थ्यात्। स्पर्शवद्वेगवद्द्रव्यसंयोगस्यैवाभिघातत्वात्। एतदन्यकर्मसमवायिकारणाजन्यत्वं हेतुः, तच्च गुरुत्वादि। एतेनेति। सूत्रकृता वायुगुणगणनायां रूपस्यानिर्देशेन स्पर्शस्य च निर्देशेनेत्यर्थः। नन्वेवमरूपत्वसाहित्येन स्पर्शस्यासाधारणत्वे स्पर्शस्य वायुत्वव्यवस्थापकत्वं पूर्वोक्तं विरुध्येतेत्यत आह—तथा चेति। न हि स्पर्शत्वेन तस्यासाधारणता, अपि त्वेतादृशस्पर्शत्वेनेत्यर्थः। कस्यचिदिति। खण्डप्रलयेऽनित्यद्रव्यानवस्थित्या पुनर्वायुसृष्टिर्न स्यादित्यर्थः। ननु स्पर्शेनानुमातव्य इत्यत आह—परमाणव इति। शब्दादिभिरपि नानुमानमित्याह—स्थूलानामिति। स्थूलकार्याणामित्यर्थः। तेषां परमाण्वजन्यत्वेन परमाण्वनु-

मापकत्वादित्याशयः। संस्थानविशेषः स्थानविशेषः गोलकादिलक्षणः। संभवात् सत्वात्। अङ्गमङ्गिसलिलं प्रस्वेदः। नन्वेतावता पृथिव्याद्यभिभूतावयवारब्धत्वमिन्द्रियभिन्नस्य वायोः प्राप्यते, न च सर्वस्य तस्य तथात्वे मानमस्ति, तथा-
82.4 चान्यस्यापीन्द्रियत्वं कुतो न भवतीत्यत आह-अत एवेति। अयमाशयः। कस्यचिदेवेन्द्रियत्वं न सर्वस्येत्यत्रादृष्टविशेषारब्धत्वं प्रयोजकम् इन्द्रियत्वेऽपि कस्यचिदेव व्यञ्जकत्वमित्यत्रानभिभूतत्वं प्रयोजकमिति। ननु शरीरस्य तद्वत्सान-त्वे नखादीना शरीरत्वं न स्यादत आह—नखेति। इष्टापत्तिरित्यर्थः। ननु भाष्ये वा न द्वयमिन्द्रियपदोपादानस्य किं कृत्यमत आह—नन्विति। त्वक्शब्दवाच्यस्य पार्थिवतया न वायवीयत्वं प्रत्यक्षतया नेन्द्रियं त्वगिति शङ्कायां न त्वक्शब्दवाच्यस्य तत्त्वं ब्रूमोऽपि तु लक्ष्यस्य लक्ष्येणेन्द्रियेण शक्यायास्त्वचश्च संबन्धोऽस्त्येवेति सिद्धान्तसूचनायेन्द्रियपदमित्याशयः। एतत् वायोरप्रत्यक्षत्वम्। त्वगिन्द्रियेति। वायुप्रत्ययस्य तदजन्यत्वे तद्व्यापारोत्तरभावित्वं न स्यादित्यर्थः। ननूपपद्यते त्वगिन्द्रियप्रयोज्यतया तदुत्तरभावित्वं त्वगिन्द्रियेण लिङ्गज्ञानानन्तरं वायोरनुमानादत आह—न चेति। न वायुलिङ्गग्रहे त्वगुपक्षयः तदीयलिङ्गस्यानुष्णाशीतापाकजस्पर्शस्याग्रहेऽपि तथा प्रत्ययादित्यर्थमाह—शीत इति। ननु शीतस्पर्शादिरपि वायुलिङ्गं भवत्येव, यद्यप्याश्रयतया नानुमापयति तस्य जलादिवृत्तित्वात् तथापि त्वचा तद्ग्रहानन्तरं तदाश्रयत्वेन जलाद्यनुमानानन्तरम् एतज्जलादि केनचिदानीतम् अन्याधीनागमनवत्त्वादित्यनुमानेन तत्प्रापकतया वायुसिद्धिरिति त्वगुपक्षीणैवेति शङ्कते—

न चेति । तथा प्रतीतिः त्वगिन्द्रियव्यापारानन्तरं प्रतीतिः । 83.2
न तु शीत इत्याकारेण प्रतीतिरुपनायकत्वेन ज्ञातस्य पवनस्य शीताद्यनधिकरणतया प्रतीयमानस्य विशेषदर्शनग्रस्ततया तथा प्रत्ययविषयत्वात् । तथाप्रत्ययस्तु शीतस्पर्शादौ वायुलिङ्गत्वारोपादित्यवधेयम् । बाधकाभावादिति । प्रत्यक्षत्वे बाधके सत्येतावत्कल्पनमुचितम् अन्यथा घटादावपि चक्षुरादीनां रूपादिग्रह उपक्षयः स्यादित्यर्थः । ननु यद्यपि यत्र स्पार्शनत्वं तत्र चाक्षुषत्वमिति नास्ति स्पर्शे व्यभिचारात् तथापि द्रव्यत्वे सति यत्र स्पार्शनत्वं तत्र चाक्षुषत्वम्, एवंच व्यापकनिवृत्त्या प्रकृते स्पार्शनत्वनिवृत्तिरिति प्रत्यक्षतायां बाधकं शङ्कते—अस्त्यचाक्षुषत्वमिति । विपक्ष इति । यदि तथा व्याप्तिः स्यात्तदा व्यापकनिवृत्तिर्न तु साऽस्त्यप्रयोजकत्वादित्यर्थः । ननु द्रव्यस्पार्शनज्ञानं प्रति त्वक्स्पर्शौ कारणं, तौ च चक्षूरूपोपकृतावेव ग्राहकौ, न च वायौ त्वगुपकारकत्वं चक्षुषः संभवति तस्य चक्षुरविषयत्वात्, नापि स्पर्शोपकारकत्वं रूपस्य वायौ रूपाभावात्, तथाच न वायौ स्पार्शनत्वमत आह—न हीति । चक्षुःसहकृताया एव त्वचो द्रव्यग्राहकत्वेऽन्धेन घटादयस्त्वचा न गृह्येरन्नित्यर्थः । रूपस्य स्पर्शसहकारित्वे द्रव्यग्रह इव स्पर्शग्रहेऽपि तत्स्यात्, एवंच वायुरिव तदीयः स्पर्शोऽपि न गृह्येत । न च प्रमाणाभावान्न स्पर्शग्रहसहकारिता द्रव्यग्रहेऽपि तुल्यत्वादित्यभिप्रेत्याह—रूपाभावेनेति । यदि च यद्द्रव्यं चाक्षुषं तदेव स्पार्शनमिति व्याप्तिस्तदा यद्द्रव्यं चाक्षुषं तस्यैव स्पर्शः स्पार्शन इत्यपि स्यात् सहचारस्योभयत्र तुल्यत्वादिति भावः । वायुस्पर्शोऽपि न गृह्येतेति भावः । ननु द्रव्याचाक्षुषत्वेऽपि

स्पर्शत्वाचतादर्शनान्न द्रव्यचाक्षुषत्वं तद्गतस्पर्शत्वाचताप्र-
योजकं द्रव्यत्वाचतायां तु प्रयोजकमेव तस्यामेव तद्दर्शना-
83.9 दिति शङ्कते—उष्णामिति । एवं चान्धेन त्वचा ग्रह उपपद्यत
एव व्यापकस्य पुरुषान्तरचाक्षुषत्वस्य विद्यमानत्वात् । चाक्षु-
षत्वमात्रं व्यापकं, न तु तच्चाक्षुषत्वमित्याशयः । यदि द्रव्या-
ग्रहेऽपि स्पर्शो गृह्यते तदा जलादिस्पर्शग्रहेऽपि तथैवास्तु,
तथाच जलादयोऽपि न त्वाचाः स्युरित्याह—अपार्थिव इति ।
अत्रापार्थिवे इत्यभिधानस्य न बीजं पश्यामस्तथाचापार्थि-
वे सर्वत्रेति नार्थः, किन्तु चाकाराध्याहारेणापार्थिवे सर्वत्र
वेत्यर्थः । तथाच त्वचो निराश्रयस्पर्शग्रहसामर्थ्ये पृथिव्या-
दावपि प्रवृत्तिर्न स्यादित्यर्थः । नन्वस्मन्मते प्रत्यभिज्ञान-
मुपपद्यते ग्राह्यत्वे त्वाचज्ञानानन्तरं चक्षुःसंनिधाने तदेवेद-
मित्याकारकं त्वगाहितसंस्कारसत्त्वान्न तु भवन्मते संस्कारा-
भावादत आह—प्रत्यभिज्ञानमिति । यथाऽप्रत्यक्षेऽपि वायौ
प्रमाणान्तराहितसंस्कारबलेन प्रत्यभिज्ञा तथानुमानिके
जलादावित्यर्थः । ननूष्णं जलमित्यादिर्भ्रमो धर्मभ्रमे, धर्म-
ग्रहेऽपि न धर्मिप्रत्ययनियमः, शीतलं जलमित्यादिप्रमायां
तु नियम एव, अन्यथा प्रत्यये जलोल्लेखानुपपत्तेः चाक्षुष-
त्वप्रयोजकस्य योग्यरूपवत्त्वस्येव त्वाचत्वप्रयोजकस्य योग्य-
स्पर्शवत्त्वस्य सत्त्वेन त्वाचत्वे बाधकाभावाच्च । एवंच जलादि
त्वाचं भवत्येवेत्याशङ्क्य वायुरप्येवं त्वाचस्तदीयस्पर्शग्रहेऽपि
धर्मिण उल्लेखात् महत्त्वसमानाधिकरणोद्भूतस्पर्शवत्त्वस्य द्र-
व्यत्वाचत्वप्रयोजकस्य जलादाविव तत्रापि सत्त्वाच्चेत्याह—
अथेति । वायुरिति । अत्र घ्राणादौ व्यभिचारवार-
णाय—उपलभ्यमानेति । प्रत्यक्षेत्यर्थः । घ्राणादिस्पर्शस्याप्य-

नुमानादिग्राह्यत्वात् । यद् द्रव्यं त्वाचं तस्य संख्यादयोऽपि तथा, तथा च वायोस्त्वाचत्वे तद्गताः संख्यादयोऽपि गृह्येरन् । न चायं नियम एव नास्ति समानोपलम्भयोग्यतया तथा नियमसिद्धेः । अत एव यद् द्रव्यग्राहकं तत्संख्यादिग्राहकमिति सिद्धौ द्वीन्द्रियग्राह्यता संख्यादीनामुपपद्यते चक्षुषा द्रव्यग्रहे संख्यादीनां ग्रहात् त्वचा च ग्रहेऽग्रहात् । योग्यताभेदे तु द्रव्यग्रहेऽपि तदग्रहे सा न स्यात् । क्वचित्तु योग्यतायां समानायामपि द्रव्यग्रहेऽपि संख्यादयो न गृह्यन्ते दोषवशात् । 83.19-20
नैतावता योग्यतावैरूप्यम् । तथा च वायुर्न त्वाचः अत्वाचसंख्यावत्त्वात् आकाशवत् इत्यभिप्रेत्याह—अत्रोच्यत इति । एतत् संख्यादीनामप्रत्यक्षत्वम् । ननु तुल्योपलम्भयोग्यत्वेऽगृह्यमाणसंख्यादि तोयादि न गृह्येतेत्यत आह—अत एवेति । इष्टापत्तिरित्यर्थः । स्थापनानुमानस्य न्यूनबलत्वमाह—तथा चेति । योऽयमिति । पृथिव्यादिस्पर्शे सिद्धसाधनवारणाय—रूपवद्द्रव्यासमवेत इति । योग्येति । योग्यानुपलब्धिवशाद्रूपासामानाधिकरण्यमस्य सिद्धमित्यर्थः । नन्वयोग्यतया रूपं नोपलभ्यते तथा च रूपसामानाधिकरण्यमस्त्येवेति शङ्कते—न चेति । रूपस्यायोग्यता हि द्वेधा—अभिभवादनुद्भवाद्वा, तत्र प्रकृते चेदाद्या स्यात्तर्ह्यभिभावकं किञ्चिद्रूपमुपलभ्येत । अन्यथा तु न संभवति पार्थिवोद्भूतस्पर्शस्योद्भूतरूपसामानाधिकरण्यनियमात् । उष्णादिस्पर्शे व्यभिचारवारणाय—पार्थिवेति । न चाप्रयोजकत्वं सामग्रीसाम्येनैकोद्भवेऽपरोद्भवनियमात् इत्याह—अभिभावकस्येति । अन्यथेति । यदि न सामग्रीसाम्यमित्यर्थः । यद्यप्युद्भूतरूपवत्यां पृथिव्यां नोद्भूतस्पर्शनियमो नयनगतपित्तभागे

व्यभिचारात् तथाप्युद्भूतनीलरूपवत्त्वामस्त्येवेत्यभिप्रायेणोक्तम् । स्पर्शे तु सामान्यत एव नियम इत्याशयः ।
85.5 किं च यद्यस्य पृथिवीत्वं स्यात् तदा गुरुत्वं स्यात् । तथाच तत्पूरिते चर्मपुटकादाववनतिविशेषः स्यादित्याह-किञ्चेति । या पृथिवी तत्र गुरुत्वमिति व्याप्तेर्धूमे व्यभिचारः तदापूरितेऽवनतिविशेषाभावेन गुरुत्वाभावादिति शङ्कते-धूमेति । अलं धूमतामापन्नैर्धूमैरवनतिविशेषदर्शनेन तत्कारणस्य गुरुत्वं तत्रानुमानादित्याह—अलं धूमेति । गरिमविशेषहेतोर्गरिमविशेषे हेतुर्यत्रेत्यर्थः । यद्वा, गरिमविशेषस्य हेतोर्लिङ्गस्येत्यर्थः । एवंच धूमेऽपि गुरुत्वमस्त्येवेति न व्यभिचार इति भावः । एवं च परिशेषात् प्रकृते तादृशस्पर्शाश्रयद्रव्यान्तरसिद्धिरित्याशये विवादाध्यासितमिति । एवमिति । पृथिव्याद्यभिघातजन्मनि सिद्धसाधनवारणाय असतीत्यादि पक्षविशेषणम् । विभागजन्मनि शब्दे व्यभिचारवारणाय—आविर्भज्यमानेति । नभसीति । जलादिधृततृणादौ व्यभिचारवारणाय— नभसीति । प्रयत्नवत्संयोगहेतुकधृतौ व्यभिचारवारणाय—अस्मदादीति । निस्तरङ्गः अप्रयोजकत्वशङ्काशून्यः कारणं विना कार्यानुत्पत्तेरित्याशयः । तिर्यग्गमनासमवायिकारणमाह—अदृष्टवदिति । यानपात्रेति । अनुकूले पवने नौकायाः शीघ्रं गमनादित्यर्थः । आदिशब्दादिति । व्यजनपवनादिनाङ्गसङ्गिनः सलिलस्य स्पर्शाभिव्यक्तौ च नल दीपनस्य (?) फूत्कारादिना जननादित्यर्थः ।

ननु धर्मिग्राहकं प्रमाणं स्पर्शः क्वचिदाश्रितः स्पर्शत्वात् पृथिवीस्पर्शवदित्येवं, न चानेन नानात्वं सिध्यति,

तथा च कथमित्थमभिधानमिति चेन्न। तेनाप्रसिद्धद्व्यनन्तरं स स्थूलोऽवयवी प्रत्यक्षस्पर्शाश्रयत्वाद् घटवदित्यनुमानं, तदनु स द्व्यणुकादिप्रक्रमेणारब्धः स्थूलावयवित्वाद् घटवदित्यनुमानं, ततश्चायं संतानो नाना कार्यकारणभावापन्नत्वात् कार्यकारणभावापन्नकपालघटवदित्यनुमानम्। एवं च नानात्वानुमानस्य धर्मिग्राहकोपजीवनेन प्रवृत्तेः धर्मिग्राह- 86.9
केण नानात्वसिद्धिरुक्तेत्याशयात्। अपि च वायुर्नाना स्पर्शवत्त्वात्पृथिवीवदित्यप्यनुमानं संभवतीत्याह—शक्यते चेति। चोद्येति। वायोस्तिर्यग्गमनस्वभावतया यदूर्ध्वगतिशालि तद् द्रव्यान्तरमिति पूर्वपक्षनिवारणाय चासौ ग्रन्थ इत्यर्थः। ननु जलादिसंमूर्छनेऽव्याप्तिरत आह—वाय्वोरितीति। ननु मनसोः संयोगेऽतिव्याप्तिरत आह—स्पर्शवतोरितीति। तृणाद्यधोगमनादिना कथमनुमानमत आह—अत्रापीति। न चैतदिति। ऊर्ध्वगमनमित्यर्थः। ननु सावयवित्वेन द्व्यणुकस्यारम्भः संभवति न त्र्यणुकस्येत्यत आह—अवयवानामिति। एवं च सावयविनोरित्यस्य महत्त्वविशेषवतोरित्यर्थः। अधिकं भिन्नम्। द्रव्यान्तरमेव वायोस्तिर्यग्गमनस्वभावत्वादिति नाशङ्कनीयं तत्स्वभावस्यापि कारणवशेनोर्ध्वगमनोपपत्तेः द्रव्यान्तरकल्पनायां मानाभावादित्यर्थः। संयोगस्येति। अभिघातस्य संयोगात्मकत्वादित्यर्थः। प्रयत्नकृतफूत्काराद्यूर्ध्वगमने व्यभिचारवारणाय प्रयत्नाद्यसद्भाव इति। आदिपदेन नोदनापरिग्रहः। तिर्यग्गतिस्वभावत्वं चानूर्ध्वगतिशीलत्वं नातो दृष्टान्तासिद्धिः। अनुकूलं तर्कमाह—अन्यथेति। ऊर्ध्वगतिमानयमिति। तिर्यग्गम-

नासमवायिकारणसंयोगाश्रये व्यभिचारवारणाय—ऊर्ध्वगति-
87.19 मानिति । पूर्वक इति । कार्यकारणभावलक्षण इत्यर्थः ।
तृणाद्यूर्ध्वगमनासमवायिकारणसंयोगाश्रयत्वहेतुं साधयति-
तृणादीनामिति । अदृष्टवदात्मसंयोगजन्ये ज्वलनोर्ध्वगमने
व्यभिचारवारणाय—अनूर्ध्वगमनशीलस्येति । प्रयत्नादि-
जन्ये व्यभिचारवारणाय—प्रयत्नाद्यसंभव इति । एतेनेति ।
तथा च स्थानभेदवत्कार्यभेदोऽप्यस्तीत्यर्थः । मूर्तत्वेति ।
नानात्व एकस्मिन् शरीराभ्यन्तरे वृत्तिर्न स्यादित्यर्थः । यद्यपि
निविडयोरेव मूर्तयोः समानदेशताविरोधः, अन्यथा जलान्तः
स्थायिनो घटस्यानुपलम्भः स्यात् तत्र जलस्थितेः सर्वसमत-
त्वात् चक्षुःस्थितिं विनेन्द्रियसंयोगाभावेन चाक्षुषज्ञानानु-
दयात्, तथा चानिविडतया प्रकृतेऽपि न समानदेशताविरोधः
भिन्नावच्छेदेन स्थितत्या वा; अन्यथैकस्मिन् भूतले घटपटा-
दिवृत्तिर्न स्यात्, तथापि वस्तुगतिप्रसाधनार्थमारम्भः ।
एकेनैवोपपत्तौ नानात्वं किमर्थमित्याशयः । न त्विति ।
पर्यायोच्छेदप्रसङ्गादित्यर्थः ।

इति वायुनिरूपणम् ।

ननु किमिति क्रमप्राप्तं वायुनिरूपणानन्तरमाकाशनि-
रूपणमुपेक्ष्य सृष्ट्यादिनिरूपणमत आह—तेऽमीति । व्याकु-
लानां निरूपणेऽप्यग्रिमप्रमेयज्ञानं दुर्लभमिति प्रथमं व्याकु-
लता वार्यत इत्यर्थः । अविच्छेदेन प्रलयं विनेत्यर्थः ।
अनधिष्ठिताः कर्मसहकृताः । अविच्छेद इति । यदा कदापि
प्रलयो नास्त्येव तदाध्यापकपरम्परयैव वेदसंप्रदायनिर्वाहे
किं भगवता । विच्छेदे तु पूर्वाध्यापकानामतीतत्वात्सर्गादौ
तद्वक्तृत्वेन स आयातीत्यर्थः । विच्छेद इति । प्रलये सर्गा-

दौ कथं घटादिनिर्माणं कथं वा घटादिशब्दप्रयोगः पूर्वसर्गस्थितानां शिल्पकाणां व्यतीतत्वादित्यर्थः। एत एवेति। 89.9
साधारणीभूतैः कथं कश्चित् सुख्यादिः परश्चान्यथेति वैचित्र्यमित्यर्थः। अदृष्टेति। प्रलयानुरोधेन वृत्तिनिरोधे पुनः कथं सृष्टिः वृत्तिप्रापकाभावादित्यर्थः। अनाधिष्ठातानामिति। अचेतनप्रवृत्तिः पराधिष्ठानकार्येति नियमे व्यापकनिवृत्या व्याप्यनिवृत्तौ प्रवृत्तिश्चैतन्यं वा निवर्ततेत्यर्थः। उपादानेति। न हि परमाण्वादिगोचरः साक्षात्कारोऽस्मदादीनां संभवतीत्यर्थः। प्रयोजनेति। तस्य सुखदुःखध्वंसयोर्धर्माद्यभावेनासंभवादित्यर्थः। ननूपक्रान्तक्रमत्यागः किमर्थमत आह—सृष्टीति। अनिदंप्रथमतां सृष्ट्यनन्तरं प्रलयः प्रलयानन्तरं च सृष्टिरिति पौनःपुन्येनानादितां बोधयितुम्। संहारेण पूर्वसृष्टिप्राप्तेः। ब्रह्मणो मोक्षो भवतीत्यत्र प्रमाणमाह-य इति। ईदृशा ब्रह्मत्वं प्राप्य मुक्ता भवन्तीत्यर्थकागमेन ब्रह्मणो मुक्तिसिद्धिरित्यर्थः। नन्वेवं भगवतस्त्रिमूर्तित्वे प्रसिद्धिव्याहतेत्यत आह—यदा त्विति। अस्मिन् पक्षे क आगमार्थ इति चेन्न। ब्रह्मणो लोकमवाप्य मुक्तो भवतीत्यर्थात्। नित्येति। दुःखध्वंसलवस्याप्यसंभवादित्यर्थः। ननु संसारे कथं खिन्नस्त्वमत आह—जननेति। जननमरणप्रबन्धेन धारयाऽन्धकारो यत्रेत्यर्थः। ननु नाहो न भूमिरित्यादिविरोधात्कथं तत्र रात्रिरत आह—निशीथेति। नन्वग्रे पुनः संसारेण परमो विश्रामो न संभवतीत्यत आह—कियन्तमिति। ननु भुवनेऽनन्तस्य सुखासंभवे कथमधिपत्वमत आह—यथेष्टमिति। न तज्जनितसुखाधारत्वं

तत्पतित्वे प्रयोजकमित्यर्थः । अत एव यतः सकलभुवनप-
19.8 तिरित्यर्थः । कार्यकारणयोः पौर्वापर्यमाह—अनन्तर-
कालमिति । ननु भगवदिच्छायाः कथं द्वैविध्यमत
आह–यद्यपीति । अस्तीत्येवमाकारा नित्या। तथापीति ।
सहजत एकत्वेऽप्यौपाधिकं नानात्वमाकाशादेरिव न
विरुद्धमित्यर्थः । न केवलं तत्र नानात्वव्यवहार औपाधिकः
किन्तूत्पत्त्यादिव्यवहारोऽपीत्याह–उत्पत्तिरपीति । संजि-
हीर्षानन्तरकालस्य संज्ञामाह–स चेति । आदिपदेन प्र-
लयादयः शब्दा गृह्यन्ते । उत्पत्तिस्थितिहेतूनां प्रलयहेतो-
र्वृत्तिमत्त्वादेवेत्यर्थः । नन्वेवं द्व्यणुकस्योत्पत्तिः स्यादेवे-
त्यत आह—परमाणुष्व इति । गुणात्मकेऽदृष्टे क्रिया न
संभवतीत्यत आह—सर्वेष्विति । शेषेण वा प्रलयहेतुत्वार-
णमित्याह—सर्गेति । सर्गहेतोस्तेनैव प्रतिबन्धो न संभ-
वतीत्यत आह—प्रलयेति । महेश्वरेच्छा बात्माणुसंयोग-
जकर्म वेति विग्रहे द्विवचनापत्तिं वारयति—महेश्वरेति ।
भ्रमेति । विनाशस्यावयवासंभवादित्यर्थः । तथाऽनेनैवेति
भाष्यपदयोः पौनरुक्त्यपरिहारायाह—तथेति । एकत्र महे-
श्वरेच्छादिर्गृह्यते परत्र क्रियादिरित्यपौनरुक्त्यमित्यर्थः । ननु
यद्याकाशे सति वायोर्विनाशस्तदा कथं तेजोविनाश उत्तर-
सत्तेत्यत आह—जलादाविति । पृथिव्यादिक्रमेण नाश
इत्यर्थः । सांख्यादीति । सांख्यानां प्रकृतेर्वेदान्तिनामविद्या-
या मूलकारणत्वादित्यर्थः । प्रसङ्गप्रापकतयाऽनुवादस्य प्रयोज-
नजिज्ञासायां तन्मताशुद्धिसूचनमेव प्रयोजनमिति भावः ।
अवस्थाने परमाणूनां पूर्वोक्तस्य विनाशस्य कारणत्वभ्रमं

धारयति—तदेत्यर्थ इति । ननु प्रविभक्तत्वं संयोगरहितत्वं 92.12
न संभवतीत्यत आह—कार्येति । प्रचयाख्येति । द्रव्यार-म्भकसंयोगरहिता इत्यर्थः । तेषु सृष्टिदशायामपि प्रचया-ख्यसंयोगसंभवात् अनुविद्धत्वं शरादिभिरिव न संभवतीत्यत आह—संबद्धा इति । विशेषविधेः शेषनिषेधपरत्वं धारय-ति-उपलक्षणमिति । कालेति । सूर्यक्रियादेः सृष्टिदशाया-मिव तत्रासंभवादित्यर्थः । तत् क्रियैव क्षणादिपरिकल्पन-मित्याशयः । महाभूतस्य संक्षोभो नाशो येनेदृशं विभाग-जनकमाद्यं कर्म तस्मात्प्रभवो यस्य वेगस्येत्यर्थः । अन्य-थेति । शतवर्षानन्तरकालं सृष्टिः शतवर्षे सति स्यात्, न च तत्सिद्धिरुपाधिं विनेत्यर्थः । तदनन्तरकालं सृष्टौ भाष्यानुम-तिमाह—तादिदामिति । पुनःशब्दस्य प्रयोजनमाह—पुन-रिति । पूर्वोक्तैवानिदंप्रथमता पुनरुक्ता दार्ढ्यायेति भावः । ननु तदा प्राणित्वं नास्तीत्यत आह—प्राणीति । ननु योग्य-ता कादाचित्कप्राणसंबन्धेन, सा मुक्तस्याप्यस्तीत्यत आह—संसारिणामिति । विद्यमानादृष्टानामित्यर्थः । स्वेति । अनुभवो लौकिकः साक्षात्कारस्तेनानुमित्यादिरूपेषु स्वीया-तीतसुखादिज्ञानेषु नातिव्याप्तिः । ईश्वरादिष्वदृष्टं नास्ती-त्यत आह—संसारिष्विति । पूर्वप्रयोगानुरोधेनाह—लब्ध-वृत्तय इति । भाष्यं त्वार्षमिति भावः । भृशं कम्पमानत्वे हेतुमाह—द्रव्यान्तरेति । तदापि तिर्यग्गमनमेव वायोरि-त्याह—पवनेति । प्राथम्यादिति । कस्यचिद्भागस्य केनचि-दनाकर्षणादित्यर्थः । अविशीर्णतयेति । श्लथावयवत्वा-पादकस्याभिघातस्याभावादित्यर्थः । पार्थिवाणुसहितेभ्य इत्यस्य कृत्यमाह—तैजसानामिति । पितृचितृत्वलक्षणं पि-

95.4 महत्त्वं न संभवतीत्यत आह—शरीरिणामिति । किमिति समुच्चय इत्यत आह—द्वीति । ईश्वरानीश्वरकर्तृकेऽपीश्वरोऽपि कर्ता, परेषु त्वीश्वर एवेति भावः । शरीरेति । शरीरसापेक्षे कार्ये भगवति सत्यपि शरीरी कर्ताङ्गीक्रियत इत्यर्थः । न कुर्यादिति । कर्मविपाकाज्ञानादित्यर्थः । अनुरुन्ध्यादिति । पक्षपातसंभवादित्यर्थः । कृतहानं पक्षपातेन कृतस्यापि दुरितस्य फलादानेन । अकृताभ्यागमः अकृतसुकृतस्यापि फलदानेन । अनीश्वरः असमर्थः । सुननानसशब्दाविव गणशब्दोऽपि प्रत्येकमभिसंबध्यत इत्याह—गणशब्द इति । एतेषां भेदकमाह—अत्रेति । कर्मवासना धर्माधर्मौ, ज्ञानवासना भावना । अपकृष्टं धर्मादियोजनं न संभवतीत्यत आह—उपलक्षणमिति । यद्वा, अधर्मादिफलादाने पक्षपातित्वमेवागतमत आह—उपलक्षणमिति । तदेति । अभेदे आज्ञाया असंभवादित्यर्थः । पक्षद्वयेऽपि मुखादिपदमनुव्याख्यार्थमाह—मुखेति । बीजमन्त्रागमः । प्रलयविच्छित्ती प्रलयानन्तरम् । विच्छेदे प्रलये । पूर्वाध्यापकानामुच्छिन्नत्वादित्यर्थः । मानसेति । भगवता शिक्षितैस्तैरस्मदादिशिक्षेत्यर्थः । परप्रयोजनस्यैव तदिच्छाविषयतया तदिष्टत्वमाह—परार्थेति ।

इति सृष्टिसंहारनिरूपणम् ।

सर्वमिदमिति । ईश्वराधीनतयोक्तं वेदप्रामाण्यादीत्यर्थः । शरीरेति । सोत्पत्तिकं बुद्धिमत्पूर्वकमित्युच्यमाने घटादिभिरंशतः सिद्धसाधनं स्यादिति—शरीरेत्यादि । शरीरानपेक्षमित्युक्ताकाशादौ बाधः । तथाच मिलितमुपात्तं शरीरानपेक्षोत्पत्तिर्यस्य तत् क्षित्यादीत्यर्थः । सपूर्वकमित्यु-

क्तौ कालादृष्टादिभिः सिद्धसाधनमिति—बुद्धिमत्पूर्वक-
मिति । कारणवत्त्वं सकारणकत्वं न तु कारणाधा-
रत्वं स्वकारणस्य स्वस्मिन्नवृत्तेर्यत्किञ्चित्कारणाधारत्वस्या-
काशादौ सत्त्वात् । वस्तुतस्तु कारणवत्त्वेन कारणसंबन्ध-
मात्रविवक्षायां यत्किञ्चित्कारणस्याकाशादिनाधाराधेयभावा-
दिसत्त्वेन कारणजन्यत्वरूपः संबन्धो वाच्यस्तथा च जन्यत्व-
मात्रं भवतु हेतुः, न च स्वकारणसंबन्धित्वं हेत्वर्थः । तथापि
जन्यत्वस्य लघुत्वात् । ननु युगपदनुपस्थितौ लाघवानवतार
इति चेन्न । स्वकारणत्वं हि स्वजनककारणत्वं, तथा च जनक-
त्वेन समानवित्तिवेद्यतया जन्यत्वस्योपस्थितेः । यदि च 97.12
हेतौ गौरवं न दोषस्तदा भवतु स्वजनककारणवत्त्वमपि
हेत्वर्थ इति भावः । अनुपलब्धेति । कारणत्वं हि पूर्वव-
र्तित्वागर्भम् । यस्य पूर्वकाल एव न गृहीतः पर्वतादेस्तत्र कथं
कारणं ग्राह्यमित्यर्थः । कार्यगुणत्वेनेति । कार्यवृत्तिगुणत्वे-
नेत्यर्थः । न तु कार्यत्वे सति गुणत्वेन गुणत्वस्य वैयर्थ्यात् ।
कर्मत्वेनैवेति । सत्यस्य कर्मणोऽभावेन विशेषणव्यावर्त्या-
भावादित्यर्थः । ननु प्रकृतो हेतुर्विरुद्धः, जलं गन्धवज्जल-
त्वादित्यत्र हि विवक्षितगन्धवत्त्वसाध्यविपरीतेन तदभावेन
हेतोः साहचर्यमेव विरोधः, प्रकृतेऽपि च विवक्षितसर्वज्ञवै-
परीत्यमसर्वज्ञोऽस्तीत्याह—कारणवत्त्वस्येति । पक्षे विव-
क्षितः सर्वज्ञस्तद्विपरीतेनासर्वज्ञेन घटादौ सहचरितो हेतुर्वि-
रुद्ध इत्यर्थः । पक्षविवक्षितसाध्यविपरीतसाहचर्यं न विरोधोऽ-
पि तु तेन व्याप्तिरित्याह—साहचर्यमात्रेणेति । साहचर्य-
मात्रेण विरोध इत्यत्र दृष्टान्तमाह—कार्यत्वेनेति । अरू-
पस्य शब्दादेः कार्यत्वेनानित्यत्वानुमाने यथा रूपसाहचर्यं

न दोष इत्यर्थः । अयमाशयः । शब्दो नित्यः कार्यत्वादित्यत्रापि विरोधः स्यात् । पक्षे हि पक्षधर्मताबलात्प्रकृते रूपाभावसहचरितसाध्यं विवक्षितं नीरूपस्य पक्षत्वे तत्र पक्षधर्मताबलेन रूपाभावसहचरितस्यैव सिद्धेः, तद्विपरीत्यं च रूपसहचरिते घटादिवृत्त्यनित्यत्वेऽस्तीति तत्र हेतुसत्त्वेन विरोधः स्यादिति । ननु व्याप्तिरेव प्रकृते विपरीते नास्तीति विरोधः
97.18 स्यादित्यत आह—अविनेति । यदि तथा व्याप्तिरस्ति तदास्माभिरपि तथा न विवक्षित इति क्व तद्विपरीतेन व्याप्त्या विरोधः, वस्तुतया व्याप्तिरेव नास्ति, असर्वज्ञस्य कर्तुरनुपलब्ध्या बाधादिति भावः । नन्वसर्वज्ञस्य बाधेन तवाभिप्रायः सर्वज्ञनिष्ठ एवेति कथं न तद्विपरीतस्येत्यादिग्रन्थ इत्याह—असर्वज्ञस्येति । असर्वज्ञे संभवति नाभिप्रायः सर्वज्ञनिष्ठः किन्तु तस्मिन् बाधिते । एवञ्च तेन विनापि हेतोः सत्त्वान्न व्याप्यत्वमिति न विरोध इत्याह—नन्विति । नन्वसर्वज्ञ इव सर्वज्ञोऽपि नोपलभ्यत इति सोऽपि कथं सिध्यतीत्याह—तथाविधस्येति । तर्हि तेन कथं हेतोर्विरोधः, न हि शशशृङ्गेण किञ्चिद्विरुद्धमित्याह—सुतरामिति । जात्यन्धेनेति । यो हि स्पर्शानुपलम्भे रूपं घटादौ गृह्णीयाद्रूपानुपलम्भे च स्पर्शं वायौ स तयोर्विरोधं शङ्केत न तु जात्यन्धः तेन रूपाग्रहणात्, एवं तस्य सर्वज्ञस्य कर्तुरनुपलम्भे क्वचिद्धर्मिण्युपलम्भाभावे कथं हेतुना विरोध इत्यर्थः । प्रतीतौ चेति । यदि क्वचिद्धर्मिणि सर्वज्ञः कर्तोपलब्धस्तदा सुतरां न विरोधः सकारणकत्वेन सहैवोपलब्धेः कर्तुरेव कारणत्वादित्यर्थः । दर्शनेति । न ह्येकस्य धर्मिपरिहारमात्रं विरोधः स्पर्श-

स्यापि रूपेण विरोधापत्तेः, नाप्युभयोर्धर्मिपरिहारः मूर्तत्वमूर्तत्वयोस्तत्वापत्तेः, किन्तु तन्नियमः, एवंच पृथिव्यादौ रूपस्पर्शयोरिव क्षित्यादिषु सर्वज्ञकर्तृकत्वसकारणकत्वयोरुपलब्धेर्न विरोधः, वायौ रूपानुपलम्भेऽपि स्पर्शोपलम्भस्येव घटादौ सर्वज्ञानुपलम्भे सकारणकत्वोपलम्भस्य विरोधाप्रयोजकत्वात् । नहि सर्वज्ञकर्तृकत्वे सकारणकत्वस्य नियमतस्त्यागः संभवति, अन्यतरस्तस्यैव कर्तुः कारणत्वादित्यर्थः । ननु हेतुना कारणकत्वेन साध्यविशेषस्य सर्वज्ञकर्तृपूर्वकत्वस्य पूर्वोक्तयुक्तेर्मास्तु विरोधः किन्तु साध्यविशेषयोरेवासर्वज्ञसर्वज्ञकर्त्रोः स इति शङ्कते— स्यादे 98.6
तदिति । ननु तयोरुपस्थापकाभावादनुपस्थितयोः कथं विरोधोपस्थितिरिति शङ्कायामाह व्याप्तीति । तथा च नोपस्थापकाभाव इत्यर्थः । तयोर्विलक्षणोपस्थापकत्वं दर्शयति—व्याप्तिरिति । दृष्टानुरूपं व्याप्तिः साधयति, पक्षधर्मता त्वन्यथेत्यर्थः । एवं च ताभ्यामुपस्थापितयोर्विरुद्धत्वेन ज्ञापितयोः कथं क्षित्यादौ ज्ञानमित्याह—न चेति । अनयोर्विशेषयोरज्ञातयोर्न विरोधज्ञानमित्याह-स्वरूपेणेति । ननु ताभ्यां ज्ञातयोर्विरोधज्ञानमत आह-परस्परेति । अनपेक्षाभ्यां ताभ्यां तयोरुपस्थितिः सापेक्षाभ्यां वा ? नाद्य इत्याह-न हीति । केवलया व्याप्त्या केवलव्याप्तिज्ञानेन । पक्षधर्मतया पक्षधर्मताज्ञानेन । एवं च निरपेक्षाभ्यां ताभ्यां तयोरनुपस्थितेः कथं विरोधज्ञानमित्यर्थः । द्वितीय आह-सापेक्षेति । परस्परसहकारितापन्नाभ्यां हि तथैवोपस्थापनीयं यथा न विरोध इत्याशयः । एकमेव ज्ञानं ताभ्यामनुमितिरूपं जननीयं,

तथा च जातेकार्ये विरोधो नेति भावः । ननु जायमाना-
यामनुमितौ पक्षधर्मताबलादलौकिकविशेषसिद्धौ कथं लौकि-
,98.19 कविशेषभानं विरुद्धयोरेकज्ञानेऽभानादिति शङ्कते—नन्विति ।
एतावता कथं लौकिकविशेषभानमिति चेदभिलषितं तत्रे-
ष्टापत्तिरिति पूर्वपक्षसिद्धान्ताभ्यामाह—ततः किमित्या-
दिना । ननु यथा सामग्रीसत्त्वेऽपि विरोधेन लौकिको न
सिध्यति तथाऽलौकिकोऽपि न सिध्येत् अन्योन्यविरोधस्य
तुल्यत्वादित्याह —अनेनेति । तादिदामिति । द्व्यणुकं सम-
वायिकारणजन्यं भावकार्यत्वात् । अत्र हि पक्षधर्मताबलाद्
द्व्यणुके नित्यं समवायिकारणं सिध्यति अनित्येऽनवस्थानात्,
तथाच तयोर्विरोधेऽपि यथा नोभयासिद्धिस्तथा प्रकृतेऽपी-
त्यर्थः । व्याप्तिर्नानित्यसमवायिकारणेन, अपि तु समवायि-
कारणेन । सा च दृष्टान्तेऽनित्यसत्त्वेऽपि पक्षे तेनानुपपद्य-
माना नित्यमादाय पक्षधर्मतासहकारेण यथा पर्यवस्यति तथा
प्रकृतेऽपि नासर्वज्ञकर्त्रा व्याप्तिः किन्तु कर्त्रेति पक्षधर्मतासहायेन
सर्वज्ञं कर्तारमुपस्थापयति । एवंच यद्यसर्वज्ञेन व्याप्तिः स्यात्त-
दा सर्वज्ञोपस्थापिकया पक्षधर्मतया विरोधः, न त्वेवं, तथा च
सहकारिताभ्याम् ताभ्यामविरुद्ध एवार्थ उपस्थापनीयः । स
कर्ता व्याप्त्या सर्वज्ञश्च पक्षधर्मतयेति न दोष इति भावः ।
निरपेक्षाभ्यां व्याप्तिपक्षधर्मताभ्यां विरोध्यविरोधो वा कोऽ-
प्यर्थो नोपतिष्ठत इति कथं विरोधज्ञानं, सापेक्षाभ्यां त्व-
विरुद्ध एवार्थ उपस्थापनीयः । स च यदि व्याप्त्या कर्तृ-
मात्रं पक्षधर्मतया सर्वज्ञस्तदा न सर्वज्ञासर्वज्ञयोरेकदोप-
पस्थितिरिति कयोर्विरोध इति तत्त्वम् । ननु पक्षधर्मताबला-
न्नित्यं ज्ञानम् अशरीरः कर्ता सिषाधयिषितः, स च न सेद्धुमर्हति
ज्ञानत्वनित्यत्वयोरस्मदीयज्ञानाकाशादौ विरोधावधारणा-

त्, । एवं कर्तृत्वाशरीरित्वयोरपि कुविन्दादिमुक्तयोरिति 99.5
शङ्कते-स्यादेतादिति । साध्यस्यांशौ यौ विशेषौ ज्ञानत्व-
नित्यत्वप्रभृती, ज्ञानत्वविरोधान्नित्यत्वं कुत्रापि न तिष्ठती-
ति वक्तुमशक्यम्, एवं सति नभःप्रभृतावप्यस्यासत्त्वापत्तेः ।
एवं नित्यत्वविरोधे ज्ञानत्वस्य सामान्यत एवासत्त्वे ज्ञानं जगति
न स्यादेव । उष्णत्वशीतत्वयोरपि न सामान्यत उच्छेदप्रयोज-
को विरोधः शीतोष्णयोर्जलतेजसोरुपलब्धेः, किन्तु विरुद्धद्व-
यमेकस्मिन् धर्मिणि न तिष्ठतीति विरोधकृत्यम् । तस्माद्यथा
शीतत्वोष्णत्वयोः पृथिव्यादावेकत्रासत्त्वं तथा प्रकृतेऽप्येक-
स्मिन् धर्मिण्यसत्त्वं वाच्यं, स च धर्मी यद्यस्मदीयज्ञानादि-
स्तदेष्टापत्तिस्तत्रोभयोरनङ्गीकारात्, अथेश्वरस्तस्तज्ज्ञानादि-
स्तदा सिद्ध्यसिद्धिव्याघातः । अत एव मूर्तत्वनित्यत्वयोर्घ-
टादौ विरोधेऽपि न परमाणौ संसिद्ध्यसिद्धिव्याघातादि-
त्याह—एतदपीति । नन्वेतैः प्रकारैर्विशेषविरोधाभावे
प्रकाराभावे भवत्सिद्धान्तस्य दोषत्वं व्याहन्येतेत्यत आह—
विशेषेति । यत्र हेतुसाध्यविशेषणयोर्विरोधस्तत्र विशेषवि-
रोध इत्यर्थः । स च प्रकृते नास्तीति भावः । ननु हिमं
वह्निमत् तृणादिविकारकारित्वादित्यप्यनुमानं स्यात् । न
च वह्निमत्त्वव्यापकमौष्ण्यं, तच्च ततो निवर्तमानं स्वव्या-
प्यमपि निवर्तयति, तर्हि कर्तृव्यापकशरीरनिवृत्त्या प्रकृते
कर्तृनिवृत्तिरपि स्यात् । एवंच व्यापकस्यानुपलब्ध्याऽभावेन
साध्यस्य बाध एव प्रकृतेऽस्माभिर्विशेषविरोधपदेनाभिहित
इत्याह-स्यादेतदिति । यत्र कर्तृत्वं तत्र शरीरित्वमिति
व्याप्तिः । यद्वा, यत्र कार्यत्वं तत्र शरीरिकर्तृपूर्वकत्वमित्ये-
वा । प्रथमे ईश्वरो न कर्ताऽशरीरित्वादित्यत्र सिद्ध्यसि-
द्धिव्याघातः, परमाणवः सावयवाः मूर्तत्वादित्यत्रेव । द्विती-

यस्तु नियमस्त्वयापि नाङ्गीक्रियते, अन्यथा क्षित्यादौ
तद्व्यावृत्त्या कार्यत्वस्यापि निवृत्तिप्रसङ्गादित्याह–नैतद-
100.11 पीति । दृष्टान्तानुमानं तु कीदृशम्? यदि हिमं तेजोवत्
रूपादिपरावृत्तिकारित्वादिति विवक्षितं तदा सदनुमानमे-
वैतत् तत्र तेजसो विद्यमानत्वात् । अनुष्णं कथं तेज इति
चेत्तदसिद्धेस्तर्हि तेजसैव रूपादिपरावृत्त्युत्पत्तौ हिमे हेतुरसिद्ध
इति चेन्न । हिमस्यापि सहकारित्वात् । तस्मादत्र न व्याप-
कानुपलब्ध्या बाधः तेजसः स्वव्यापकेनौष्ण्येन सह विद्यमान-
त्वादित्याह–तृणादीति । ननु विरोधिनि हिमे विद्यमाने
कथं तेजःस्वभावत आह–न हीति । ननु हिमं वह्निमत् तृणा-
दिभस्मकारित्वादित्यत्रौष्ण्य विशेषव्यापकव्यावृत्त्या वह्नि-
व्यावृत्तिः स्यादित्यत आह–अथेति । अत्र स्वरूपासिद्धि-
रेव दोषः, एवञ्च व्यापकानुपलब्ध्या बाधलक्षणो विरोधः प्र-
कृते नास्तीत्यर्थः । ननु हिममग्निमत् तृणादिविकारकारित्वा-
दित्यनुमाने स दोषोऽस्त्वत आह–अथेति । अत्र बाधादेव
बाधो न व्यापकबाधेनेत्यर्थः । ननु तेजःसाधकानुमानेऽप्येवम-
स्त्वत आह—अतादृशस्येति । वह्निभिन्नस्य तेजसो निवृ-
त्तिर्भवतोऽन्यनिष्ठा कारणं विना रूपपरावृत्तेः कार्यस्यानुत्प-
त्तिप्रसङ्गात्, अत एव तन्निवृत्तिसाधनमशक्यमित्यर्थः ।
तस्मादिति । दृष्टान्तदार्ष्टान्तिकयोरसंभवादित्यर्थः । नन्वी-
दृशि स्थलेऽनुमाने को दोष इत्यत आह—सत्प्रतिपक्ष-
स्त्विति । कथञ्चिदिति । स्थापनायाः पूर्वोक्तदोषाप्रति-
संधान इत्यर्थः । अन्यथा न्यूनबलत्वादिति भावः । तथावि-
धेति । औष्ण्यमात्रस्य विद्यमानत्वादित्यर्थः । शरीरनिरपेक्षा
येत्पत्तिसद्धत्वं न हेतुस्तस्य विपक्षाद् घटादेरिव सपक्षादा-
काशादेरपि व्यावृत्तेरसाधारण्यादित्याह–शरीरेति । अनुत्प-

न्तत्वं च न हेतुः स्वरूपासिद्धेरित्याह—उत्पत्तीति । ननु शरी- 101.12
रानपेक्षोत्पत्तिरहितत्वं हेतुः, अस्ति च तदाकाशादौ सपक्षे इति
नासाधारण्यमित्यत आह—शरीरादिति । व्याप्तिग्राहकमेव
विशेषणं सार्थकं, प्रकृते चानुत्पत्तिमात्रम् अकर्तृकत्वव्याप्य-
म् इति शरीरपदं व्यर्थमित्यर्थः । निश्चितेति । यादृश-
स्य हेतोः सपक्षे व्याप्तिग्रहस्तादृश एव पक्षे हेतूक्रियत
इत्यर्थः । अन्यथेति । व्याप्त्यग्राहकस्यापि विशेषणस्यो-
पादाने नीलधूमादिरपि हेतुः स्यादित्यर्थः । प्रकृते स्वरूपा-
सिद्धिवारकत्वेऽपि तद्विशेषणं न देयं व्याप्त्यग्राहक-
त्वादित्याशयः । यथेति । ईश्वरज्ञानं कथं शरीरं
विना स्यादपि ज्ञानस्य शरीरजन्यत्वात्, नित्य-
तया यदि तदनपेक्षा तदा प्रयत्नमात्रमस्तु किं ज्ञानेन, न च
ज्ञानं विना तदसंभवः नित्यतया ज्ञानानपेक्षत्वादित्यर्थः ।
इतीति । इत्यादिस्तर्करूपापरिशुद्धिः, प्रतिकूलस्तर्को दूषण-
मस्त्वित्यर्थः । ईश्वरमिति । सिद्धौ आपाद्यविरोधित्वे-
नैव सिद्धः, असिद्धौ त्वाश्रयासिद्धिरिति हृदयम् । ज्ञानानपेक्षः
ज्ञानासमानाधिकरणः । अन्यथेष्टापत्तेरिति भावः । तद्वि-
पर्यया इति । अनित्यप्रयत्नशरीरासर्वज्ञजन्यत्वाभावा हि
विपर्ययाः, तत्र जन्यत्वाभावमात्रस्य व्याप्यत्वे शेषवैयर्थ्या-
दिति भावः । नन्वीश्वरो बुद्धिमान् प्रयत्नवत्त्वादित्यत्रानित्य-
प्रयत्नवत्त्वमुपाधिः, बुद्धिमत्यस्मदादौ विद्यमानत्वेन साध्य-
व्यापकत्वात् प्रयत्नवति भगवत्यसत्त्वेन साधनाव्यापकत्वा-
दित्यत आह—न चेति । बुद्ध्या वेत्यादि दृष्टान्तार्थम् ।
यथेश्वरः प्रयत्नवान् बुद्धिमत्त्वादिति नानुमानं तथा स
बुद्धिमान् प्रयत्नवत्त्वादित्यपि न क्रियत इत्यर्थः । इत-

102.9 रेति । अत्रापि यथा यदीश्वरो निष्प्रयत्नः स्यान्निर्बुद्धिः
स्यादिति नोच्यते, तथा यदि निर्बुद्धिः स्यान्निष्प्रयत्नो भवे-
दिति नोच्यत इति दृष्टान्ततयैवैकमुच्यते, तथा च न काप्य-
संगतिरित्यर्थः । अन्यथा प्रयत्नेन बुद्धिसाधने प्रयत्नगतं
कार्यत्वमुपाधिः संभवत्यपि न तु बुद्ध्या प्रयत्नसाधने
बुद्धेः प्रयत्नकार्यत्वेन हेतुत्वेनानुपन्यासात् दृष्टान्तेऽपि तथा-
त्वाभावाच्च । प्रयत्नेन बुद्धिसाधने हीदं वक्तुं शक्यते
दृष्टान्ते प्रयत्नकारणत्वेन बुद्धिरायातु नेश्वरे तत्प्रयत्नस्य नि-
त्यतया बुद्धिं विनापि संभवात्, न तु बुद्ध्या प्रयत्नसाधन
इति तस्माद्दृष्टान्ततयैव व्याख्येयमिति । येनेति । प्रयत्नेन
बुद्धिसाधने कार्यप्रयत्नवत्त्वमुपाधिर्दातुं शक्यत इत्यर्थः । न
तु वस्तुगत्या कार्यप्रयत्नवत्त्वमुपाधिः अस्मन्मते ईश्वरे सा-
ध्याव्यापकत्वात्, अनुमानदशायां तु तेन दातुं शक्यत
इति भावः । एवं च यथा पर्वतो वह्निमान् आर्द्रे-
न्धनादिति यद्यपि नानुमानं वह्निसामग्र्या उपाधि-
त्वात् वह्निमति तस्या नैयत्येन साध्यव्यापकत्वात् आर्द्रे-
न्धनवत्यनैयत्येन साधनाव्यापकत्वात्, पर्वत आर्द्रेन्धनवान्
वह्नेरिति वा नानुमानम् आर्द्रेन्धननियतस्य कस्यचित् सा-
ध्यव्यापकस्यायोगोलकेऽविद्यमानस्य साधनाव्यापकस्योपा-
धेः संभवात् तथापि वह्न्यार्द्रेन्धनयोरनुमानं धूमेन संभव-
त्येव धूमस्य तदुभयसाधने निरुपाधिकत्वात् । तथा प्रयत्नेन
बुद्धिसिद्धिर्मास्तु तत्रोपाधेर्वक्तुं शक्यत्वात् कार्यत्वेन तु
कारकचक्रप्रयोक्तृमत्त्वसाधने ज्ञानेच्छाप्रयत्नानां सिद्धौ न
किञ्चिद्बाधकं तस्य निरुपाधित्वात् तद्गोचरज्ञानेच्छाप्रयत्न-
वत एव प्रयोक्तृत्वेन तत्सिद्धौ ज्ञानादिसिद्धेरप्रतिहतत्वादि-

त्याह—**किन्त्विति** । **तस्येति** । मिलितसाधकस्य कार्यत्व- 102,10
हेतोरित्यर्थः । ननु यत्र यत्र सकर्तृकत्वं तत्र शरीरप्रयोज्यो विशेषो घटादाविति साध्यव्यापकः क्षित्यादौ साधनाऽव्यापक उपाधिः, न च तत्र मानाभाव इत्याह—**नन्विति** । घटादौ कश्चिदवश्यं विशेषः कारणविशेषजन्यतयावच्छेदकत्वेन वाच्यः सामान्यस्यातिप्रसक्ततया तज्जन्यतानवच्छेदकत्वादिति भावः । ननु कारणविशेषाभावात्कथं तथेत्यत आह—**अस्ति चेति** । सिद्धे कारणविशेषे कार्ये विशेष आवश्यक इत्याह—तत इति । शरीरिकर्तृकत्वानुमानानुरोधेनापि स विशेषः स्वीकार्यः कार्यत्वेन तदनुमानासंभवात् क्षित्यादौ व्यभिचारादित्याह—**अवश्यमिति** । अपि च क्षित्यादौ कृतमिति बुद्धिर्नोत्पद्यते, घटादौ तु कारणादर्शिनामपि कृतमिति धीर्जायते तत्र न घटत्वादिज्ञानं प्रयोजकम् अननुगमात्, नापि क्षित्यादिसाधारणधर्मज्ञानम् अतिप्रसङ्गादित्यनुगतानतिप्रसक्तत्वेन तादृशधर्मस्वीकार इत्याह—**स चेति** । यज्ज्ञानानन्तरं करणादर्शिनोऽपि घटादौ कृतमिति बुद्धिरुत्पद्यते स विशेष आवश्यक इत्यर्थः । तादृशबुद्धावेव किं प्रमाणमत आह—तदिति । घटादिदर्शनानन्तरमविदूरविप्रकर्षेण तत्कालं जायमानः कृत इति शब्दप्रयोग एव तत्कारणं ज्ञानमाक्षिपतीति भावः । एवं च तेनैव विशेषेण सकर्तृकत्वानुमानं न तु कार्यत्वेन सामान्येनेत्याह—**ततः स एवेति** । ननु विशेषस्यानुमापकत्वेऽपि सामान्यानुमापकं त्वदुष्टं गन्धगुणाभ्यां द्रव्यत्वानुमानदर्शनात्, एवं च विशेषस्यानुमापकत्वेऽपि सामान्यानुमापकत्वं न हीयत इत्यत आह—**कार्यत्वेति** । यत्र सामान्ये विशेषो नोपा-

धिस्तत्रैवं, प्रकृते तु सामान्यस्य विशेषेण सोपाधित्वान्नै-
103.5 वमिति भावः । तत्प्रयुक्तामिति । यथा स्फाटिके स्व-लौहित्यसंक्रामकतया जपाकुसुममुपाधिस्तथा सामान्ये स्व-व्याप्तिसंक्रामकतया विशेष इत्यर्थः । तत्प्रयुक्तां तन्निष्ठाम् । उपजीवति स्वस्मिन् ग्राहयति । विशेषस्यत्वेऽपि सामान्ये स नोपाधिः सहचारादिसत्त्वेन सामान्यस्यापि व्याप्यत्वा-दित्याह—विशेषस्येति । विशेषं प्रत्येव विशेषं प्रत्यपी-त्यर्थः । तथाच तस्येदमेवाधिक्यं यत् सामान्यं विशेषं च साधयति न तु सामान्यसाधके सामान्य उपाधित्वमि-त्याशयः । यदि विशेषस्य सामान्येऽप्यवश्यमुपाधित्वं तदाह—अन्यथेति । यद्दृष्टेरित्यादिवाक्यप्रतिपाद्यस्यापि घट-त्वाद्यपेक्षया सामान्यत्वादित्यर्थः । एवं च साध्यव्याप्यता-र्थत्वाव्यापकतया साध्यव्यापको विशेषो नोपाधिरिति भावः । तस्य साध्यव्याप्यतासिद्धयेऽनुकूलं तर्कमाह—तर्क इति । ननु क्षित्यादिकमकर्तृकं शरीराजन्यत्वाभावादाकाशवदिनुमानं स्यात्, न च वैयर्थ्यम् अखण्डाभावत्वादत आह—विस्त-र इति । अत्राकारणकत्वमुपाधिरित्यर्थः । ननु कार्यत्वेन हेतुना सकर्तृकत्वमात्रं सिध्येत् तेनैव घटादौ व्याप्ति-ग्रहात् नित्यसर्वज्ञत्वादिस्तु कुतः सिध्यतीत्याह—आस्त्वाति । एव सामान्यस्य सिद्धिः । ननु सामान्यसिद्ध्यनन्तरं क्षित्यादिकं सर्वज्ञकर्तृकम् असर्वज्ञाकर्तृकत्वे सति सकर्तृक-त्वादित्यनुमानेन विशेषसिद्धिः स्यादत आह—यथा हीति । साध्याप्रसिद्धेस्तथानुमानमशक्यमित्यर्थः । लब्धेति । सपक्षे प्रसिद्धपक्षे साध्यत इत्यर्थः । सामान्येति । सामान्यव्याप्तिः पक्षधर्मताबलाद्विशेषं साधयतीत्यर्थः । नानुमानस्यैवैषा

मर्यादा किन्तु प्रमाणान्तरेऽपि सामान्यसाधकं सहकारिवशा-
द्विशेषं साधयतीत्याह—सामान्येति । घटसामान्ये हि 104.1
शक्तं घटपदं योग्यतादिवशाद्देश्च यथा घटविशेषं बोधयति
तथा सामान्यव्याप्तेन हेतुना पक्षधर्मताबलाद्विशेषसिद्धि-
रित्यर्थः । ननु यथा प्रसिद्धं व्यापकतया नोपादीयते तथा
पक्षधर्मतयापि न सेद्धुमर्हतीत्यत आह—अन्यथेति ।
तर्हि प्रसिद्धानुमानेऽपि पक्षधर्मताबललभ्योऽर्थो न सिध्येद-
प्रतीतत्वादित्यर्थः । एवं चाप्रतीतस्य व्यापकता परं न
ग्रहीतुं शक्यते, सिद्धिस्तु स्यादेवेति भावः । नन्विच्छा
द्रव्याश्रिता गुणत्वादित्यनुमानोत्तरं पृथिव्यादिनिषेधेऽष्टद्र-
व्यातिरिक्तद्रव्याश्रिताऽष्टद्रव्यानाश्रितत्वे सति गुणत्वादिति
व्यतिरेकी क्रियते, स न क्रियेत प्रथमानुमानेनैव पक्षधर्मता-
बलादतिरिक्तद्रव्यसिद्धेरिति शङ्कते—अत्रेति । विशेषव्यव-
स्थापकं प्रमाणेषु द्वयम् आकाङ्क्षाऽपरानुपपत्तिः । शाब्द-
बोधस्यान्वयविषयकत्वं यदर्थोक्तत्वेन तदर्थविषयकतानैयत्य-
माकाङ्क्षा, घटवद्भूतलमिति शब्दाद्धि घटभूतलसंसर्गो भासते,
न च घटाद्यविषयकत्वे संसर्गभानं संभवति केवलस्य संसर्ग-
स्याभानादिति तदविषयत्वे संसर्गविषयत्वमपि न स्यादेवेति
सोऽपि भासते । एवं चान्वयिनि तावानर्थः परिस्फुरति यावता
प्रतिज्ञार्थोपपत्तिः न त्वधिकः । जाते चान्वयिनि सामान्या-
वगाहिनि तत्काङ्गीकृतेषु बाधानुपपत्तिः तत्र विशेषान्तरसि-
द्धये व्यतिरेकी प्रवर्तत इत्याह—तदसदिति । द्विविधा
ह्यनुपपत्तिः एका प्रतीत्यनुपपत्तिः अपरा प्रतीतानुपपत्तिः ।
प्रतीत्यनुपपत्तौ विशेषोऽपि प्रथमप्रतीतावेव भासते तद-
विषयत्वे प्रतीतेरेवोत्पत्तुमनर्हत्वात् । एवं चान्वयिनि

तावानर्थो भासते यावता विना प्रतीतिरेव न भवति, यत्र तु प्रतीतस्यानुपपत्तिस्तत्र कल्प्यै विशेषैः प्रतीतस्य सामान्यस्यानुपपत्तेस्तदुपपत्तये विशेषान्तरसिद्धये व्यतिरेकधीर्क्रियत इति ।

प्रकृते च द्व्यणुकादिपक्षीकरणे तत्र कर्तृसिद्धिः परमाण्वादिगोचरज्ञानसिद्धिं विना न स्यादेव कारकप्रयोक्तुः कर्तृत्वात्, कारकगोचरज्ञानादिमतश्च प्रयोक्तृत्वात्, प्रकृते च परमाण्वादेरेव कारकत्वात् । एवं च द्व्यणुकादौ सकर्तृकत्वसिद्ध्या परमाण्वादिविषयकज्ञानलक्षणो विशेषः सिद्ध

104.9 एवेत्याह—तद्येति । नन्वेतावतास्य विशेषस्य सिद्धावपि शरीरानपेक्षज्ञानलक्षणो विशेषः कथं सिध्यतीत्यत आह—एवमिति । तत्रापि विशेषासिद्धौ प्रतीत्यपर्यवसानमेवेत्यर्थः । ननु तत्र कस्यचिच्छरीरिणो विषयविषयकमिन्द्रियजन्यं ज्ञानं भविष्यतीत्यत आह—सर्गसंनिहितो हीति । शरीरादीनामसंभवादेव जन्यं ज्ञानं न संभवतीत्यर्थः । सर्गसंनिहितत्वं शरीरादिसर्गसंनिहितत्वं न तु सामान्यतः, द्व्यणुकादीनां सर्गस्य तत्र विद्यमानत्वेन सर्गकालत्वादेव । तस्मादिति । पक्षधर्मतासहायात्कार्यत्वादेव प्रकृताभिलषितसिद्धिः विशेषाप्रतीत्या सामान्यस्याप्रतीतेः प्रसङ्गादित्यर्थः । एवं च प्रकृतान्वयिनि प्रतीत्यनुपपत्त्या सामान्यसिद्धिदशायामेव विशेषसिद्धिः । इच्छादयः क्वचिदाश्रिता इत्यत्र तु प्रतीत्यनुपपत्तिः आश्रयादिशब्दस्य पृथिव्यादिनाप्युपपत्तेः । तत्र बाधावतारे तु प्रतीतानुपपत्तिरित्याह—इच्छादय इति । पारतन्त्र्यम् आश्रितत्वम् । आदिशब्दात् कवचिच्छब्दग्रहः । येनेति । एवं च सामान्यत एव प्राप-

निको बोध इत्यर्थः। प्रतीतानुपपत्तिं दर्शयति—प्रमाणान्तरेति।

इति ईश्वरनिरूपणम्।

ननु कया संगत्याकाशप्रकरणे कालदिशोरुपन्यास इत्यत आह—आकाशेति। आकाशनिरूपणे प्रसङ्गेनेत्यर्थः। स्मृ- 105.1
तस्योपेक्षानर्हत्वं प्रसङ्गः। एवं चाकाशसंज्ञायाः पारिभाषिकत्वे वक्तव्ये साम्यात्कालदिशोरपि स्मरणं, तयोरुपेक्षा नोचिता। किन्तु तत्रापि पारिभाषिकत्वमवश्यं वक्तव्यं युगपदभिधाने तु लाघवमपीत्याशयः। ननु किमिदं पारिभाषिकत्वं? यद्याधुनिकसंकेतविषयत्वं तन्न पृथिव्यादावीश्वरसंकेतस्यैव सत्त्वादत आह—निमित्तमन्तरेणेति। प्रवृत्तिनिमित्तमन्तरेणेत्यर्थः। ननु पृथिव्यादौ शक्तिग्रहः प्रवृत्तिनिमित्तपुरस्कारेण दृष्टः पृथिवीत्वजातिमती पृथिवीपदवाच्येत्यादि तदाकारदर्शनात्, प्रकृते तु कथं तद्विलक्षणः शक्तिग्रह इत्यत आह—शृङ्गग्राहिकयेति। तत्र प्रवृत्तिनिमित्तसंभवात्तथैवेह तु विलक्षणैव व्युत्पत्तिरिति भावः। शृङ्गग्राहिकया धर्ममात्र इत्यर्थः। कुत इति। प्रवृत्तिनिमित्तापुरस्कारः इति शेषः। द्रव्यत्वस्य सत्त्वादाह—आकाशत्वादीनामिति। द्रव्यत्वं सदप्यतिप्रसक्ततयाऽप्रयोजकमिति भावः। एकत्वसंख्यावत्त्वं पृथिव्यादावपीत्यत आह—व्यक्तीति। तावता किमित्यत आह-नित्यमिति। एतादृशस्य सामान्यत्वमनुचितं लक्षणभावादित्यर्थः। ननूपस्थितायां व्यक्तौ शक्तिग्रहः, उपस्थितिश्च न प्रत्यक्षात् अतीन्द्रियत्वात्। नापि केनचिच्छब्देन, ततो धर्मविशिष्टस्यैवोपस्थितत्या विशिष्टे शक्तिग्राहकेण विशेषणेऽपि ग्रहात। न हि जातिरेव प्रवृत्तिनिमित्तं सामान्यादिशब्दानामपि पारिभाषिकत्वापत्तेरित्याह—तथा

105.8 पीति । विशिष्टे शक्तिग्राहकं विशेषणेऽपि गृह्णाति । प्रकृते तु धर्मो न विशेषणम् अपि तूपलक्षणमित्याह—नेति । नन्वेवं भावे विहितस्य त्वतलादेरनुपपत्तिः शब्दप्रवृत्तिनिमित्तस्य भावत्वादिति शङ्कते—यद्येवमिति । आकाशस्येति । प्रवृत्तिनिमित्ते शब्दस्य धर्मनाम्नि लक्षणेत्यर्थः । ननु सुविभक्तौ लक्षणाविरहात् कथमित्थमिति चेन्न । एकदेशिमतेनाभिधानात् । एवं च संबन्धरूपधर्मशक्तायाः षष्ठ्याः सामान्यतो धर्मे लक्षणा, तथा चाकाशवृत्तिधर्मवत्स्वरूपमित्यर्थः । षष्ठ्यां प्राप्यत इति दिक् । ननु प्रवृत्तिनिमित्ताभावे पदान्निर्विकल्पकं स्यात् । न च येन रूपेणोपस्थिते शक्तिग्रहस्तदशक्यमपि परिस्फुरति शब्दादिति न निर्विकल्पकम्, एवमपि सहप्रयोगानुपपत्तेरत आह—व्यावृत्तीति । अष्टद्रव्यातिरिक्तद्रव्यत्वादिषु यन्नियमत उपतिष्ठते तदेकं प्रवृत्तिनिमित्तं, यदि चानेकोपस्थितिस्तदा नानार्थतैव, सह प्रयोगस्तु पिकः कोकिल इतिवदुपपद्यत इति तत्त्वम् । ननु प्रत्यक्षमेव प्रमाणं किमिति नोपन्यस्तमत आह—अरूपतयेति । ननु चाक्षुषतायां बहिरिन्द्रिययोग्यविशेषगुणवत्त्वं प्रयोजकं । तच्चाकाशेऽस्त्येवेत्यत आह—तस्येति । महत्त्वे सत्युद्भूतरूपवत्त्वं चाक्षुषत्वप्रयोजकमित्यर्थः । अन्यथेति । इन्द्रियग्राह्यविशेषगुणवत्त्वमेव प्रयोजकमस्त्वित्यर्थः । कथमिति । यद्याकाशो न चाक्षुषस्तदेह पक्षीति चाक्षुषे बोधे इहेत्यधिकरणत्वेन किं भासत इत्यर्थः । आलोक एव तत्र तथा प्रतीयत इत्याह—आलोकेति । आलोकस्याधारत्वेन कस्य प्रतीतिरिति शङ्कते—तथापीति । तस्यां प्रतीतौ तदवयवा आधारतया भान्तीत्याह—तदिति । ननु न स्पर्शवद्विशेषगुण इत्यत्र विशेषगुण-

वत्त्वप्रतिषेधे सिद्धे तत्सामान्यगुणत्वमायातु तथाच कथ-
माकाशसिद्धिरत आह—**योऽपि हीति**। एवं च विशे- 1068
षगुणत्वेऽस्य सिद्धे प्रकृतबाध्ये न स्पर्शवत्सामान्य-
गुणत्वमादायोपपत्तिरित्यर्थः । शब्दः कार्यः स्थूला-
श्रयत्वे सति सामान्यवत्त्वात् । अत्र जलपरमाणुरूपादौ
व्यभिचारवारणाय सत्यन्तं घटत्वादौ विशेष्यभागः ।
अत्र सत्यन्तसाधनाय **पूर्वतनो** ग्रन्थः । तथाचेत्याद्य-
ग्रिमग्रन्थस्तु शब्दो न सामान्याद्यात्मकः कार्यत्वादिति
सामान्यादित्रयव्यवच्छेदसिद्धिः । नित्यद्रव्यादभावाच्च व्यव-
च्छेदसिद्धिरपि तत एव । कार्यद्रव्यत्वव्यवच्छेदस्तु स्पर्शरहित-
त्वात् । कर्मव्यवच्छेदः प्रतिनियतेन्द्रियग्राह्यतया । अत एव
सामान्यगुणत्वव्यवच्छेदोऽपि ग्राह्यस्यास्य द्वीन्द्रियग्राह्य-
त्वादेव । एवंच विशेषगुणत्वमस्य सिद्धमित्याशयः । **स्पर्श-
वतामिति** । न हि शङ्खावयवरूपादिभिः शङ्खरूपादय इव
तच्छब्दैस्तच्छब्दो जन्यत इत्यर्थः । ननु पाकजैर्घटादिगुणै-
र्व्यभिचारः तत्रासंयोगस्यैव कारणतया कारणगुणानामका-
रणत्वादत आह—**अत्र चेति** । परमाणावेव पाकजा
रूपादयः, द्व्यणुकादौ तु कारणगुणैरेवारम्भ इति वादि-
नां वैशेषिकाणामिदमनुमानमित्यर्थः । परमाणुगुणैस्तु न
व्यभिचारः प्रत्यक्षत्वविरहादित्याह—**परमाणविति** ।
**अन्यथेति** । पृथिवीपरमाणुरूपादीनामनित्यत्वादित्यर्थः ।
**यदि हीति** । अन्यगुणाः श्रवसा संयुक्तसमवायेन ग्राह्याः,
न च दूरस्थेन शङ्खेन श्रवसः संयोगोऽस्ति, तथाच शङ्खादिगु-
णत्वेऽसंयुक्तशङ्खादिशब्दः श्रवसा नोपलभ्येतेत्यर्थः । **कर्णेति** ।
यथास्माकं विवरे पिहिते श्रोत्रभागे शब्दासमवायेनामासि-

107,14 इतथा तथाविहितेऽपीत्यर्थः । न चेति । दूरस्थशङ्खेन संयोगासंभवादित्यर्थः । न चेति । परगुणेन समवायो न सम्भवत्येवेत्यर्थः । नन्वाकाशगुणत्वेऽप्यप्राप्त एव शब्दो गृह्यते शङ्खाद्यवच्छेदेनोत्पन्नस्य कर्णशष्कुल्यवच्छिन्ने समवायाभावादत आह—तस्मादिति । शङ्खाद्यवच्छेदेनोत्पन्नो न गृह्यत एव किन्तु वीचीतरङ्गादिन्यायेन श्रोत्र उत्पन्नो गृह्यत इत्यर्थः । अन्यथेति । आकाशगुणत्वे समवायः प्राप्तिः संभवति शङ्खादिगुणत्वे तु कापि न संभवतीत्यर्थः । नन्विति । तथा च तत्र कारणगुणपूर्वकत्वमेव भविष्यति तदवयवेऽपि शब्दस्वीकारे विरोधाभावात् । यावद्द्रव्यभावित्वं च सदागतेर्वायोर्विद्यमानस्यापि शब्दस्य स्पर्शानुपलम्भवद्वोपलम्भाभावात् । प्रत्यासत्तिस्तु संभवत्येव वायुश्रवसोः संयोगसंभवादित्यर्थः । अन्यथापीति । आकाशगुणत्वेऽपीत्यर्थः ।

एवं चावश्यकतया स एवास्तु किं नभसेत्याशयः । ननु पूर्वाचार्यैरेतन्नोक्तमिति नाधुनिकपूर्वपक्षिणोक्तेऽपि तत्रादर इत्यत आह—वदन्तीति । केचिदाचार्या अपि तथा ब्रुवत इत्यर्थः । शब्दगुणवत्ताम् । श्रोत्रस्येति । श्रोत्रं बहिरिन्द्रियं प्रतिनियतार्थग्राहकत्वात् चक्षुर्वत् । श्रोत्रं ग्राह्यजातीयविशेषगुणवत् बहिरिन्द्रियत्वात् चक्षुर्वदेव इत्यर्थः । ननु प्रथमानुमाने साधनविकलो दृष्टान्तः चक्षुरादीनां प्रतिनियतार्थग्राहकत्वाभावादत आह—अन्यथेति । इदं हि सर्वेषामिन्द्रियाणां सर्वार्थतयोच्यते चक्षुष एवैकस्य सर्वार्थतया वा ? नाद्यः । एवं हि चक्षूराहित्येऽप्यन्धो न स्यात् इन्द्रियान्तरेण रूपग्रहणसत्त्वात् । द्वितीये तु चक्षुषो रसादिग्रहे सहकारित्वं वा तस्यैव वा रसादिग्राहकत्वम् ?

उभयथापि चक्षुषोऽभावेन रसादिग्रहो न स्यादित्यर्थः । ननु भवतु प्रथमानुमानशुद्ध्या द्वितीयानुमानसिद्धिः किमेतावतेत्यत आह—तथाचेति । शब्दाधारत्वादित्यर्थः । 108.5
तत इति । श्रोत्रस्य वायवीयत्वे किमनिष्टमित्यर्थः । एकस्येति । यदि वायवीयमेवेन्द्रियं स्पर्शशब्दयोर्ग्राहकं स्यात्तदानेकार्थतया बाह्येन्द्रियत्वस्य प्रतिनियतार्थग्राहकत्वेन व्याप्तेरित्यर्थः । ननु श्रोत्रत्वचोर्व्यक्तिभेदान्नानार्थत्वं नास्त्येवेति शङ्कते—वायवीयत्वेति । विजातीयत्वकृतं विजातीयार्थग्राहकत्वं न व्यक्तिभेदकृतमित्याह—प्रतिशरीरमिति । नन्वेकप्रकृतिकत्वेऽपि श्रोत्रत्वचोरदृष्टभेदे विषयवैचित्र्यमित्याह—अदृष्टेति । तर्हि सर्वत्रेन्द्रिये पृथिव्येव प्रकृतिरस्तु अदृष्टभेदात्तु विषयवैचित्र्यमित्याह—तर्हीति । एकप्रकृतिके बाह्येन्द्रिये न विषयवैचित्र्यमिति यदि तदा प्रकृतेऽपि समानमित्याह—बाह्येति । ननु यद्यात्मगुणाग्राहकेन्द्रियत्वं बाह्येन्द्रियत्वं तदा मनस्यपि प्रसक्तस्तेनापि रूपादिग्रहणादत आह—मनसोऽन्यदिति । तदेव साधयति बाह्येन्द्रियत्वमिति । भाष्योक्ते हेतावनुकूलं तर्कमाह—आत्मेति । अत्राप्यनियमे तर्कमाह—अन्यथेति । यत्रस्थ इति । शब्दो नात्मगुणः स्वाश्रयातिरिक्तग्राह्यत्वादित्यर्थः । तदेव दर्शयति—वीणादीति । ननु यथा सुखादयः शरीरेऽपि प्रतीयन्ते तथा शब्दोऽप्यन्यत्रत्वेनापि स्वाश्रय एवेत्याह—एतदेवेति । न त्वात्मगुणत्वयादिना आत्मासमवायो न सिद्ध इत्यत आह—ग्राहकेति । अस्य आत्मगुणत्ववादिनः । नन्वहंकारेण भिन्नतया प्रतीतिः सुखादेरप्य-

109.7 स्तीत्यत आह—व्यधिकरणस्येति । वैयधिकरण्यमेव द-
र्शयति—श्रोत्रेति । अनुकूलं तर्कमाह—अहङ्कारेणेति ।
अनेकेति । सुखं त्वेकमेकेनैवात्मना गृह्यत इत्यर्थः ।
स इति । एक एव शब्दोऽनेकात्मग्राह्यः कदम्बगोलक-
न्यायेनानेको वेति संदेह इत्यर्थः । नन्वयं शब्दः
किञ्चिच्छब्दमूलकः अनाद्यशब्दत्वादिति स्वस्वग्राह्यशब्दं
पक्षीकृत्य सर्वैरनुमानादाद्यः शब्दोऽनेकप्रतिपत्तृसाधारण
एवेति शङ्कते—संतानेति । संतानेन शब्दजन्यद्वितीयादिश-
ब्देन अनुमानमित्यर्थः । मूलप्रत्यभिज्ञानं मूलस्यानेकेन
ज्ञानम् । अयं सुखी मुखप्रसादवत्त्वादित्यनुमानेनानेकग्राह्य-
त्वं सुखेऽप्यस्तीत्याह—नहीति । प्रत्यभिज्ञानं ज्ञातज्ञा-
नम् अन्यथा वैयर्थ्यात् । आत्मेति । यथानुमानेनानेकप्रति-
पत्तृसाधारणस्य सुखस्यात्मगुणत्वं तथा संतानेनानुमितशब्द-
स्याप्यस्तित्वस्यप्रयोजकत्वमित्यर्थः । वीचीतरङ्गन्यायेनेत्य-
श्रोत्रपक्षया संतानेनानुमानेनेति शेषः । एवं चात्मसमवेत-
स्यैव शब्दस्य वीचीतरङ्गन्यायादिना योत्पत्तिस्तयोपलक्षि-
तेन संतानेनानुमानतो मूलप्रत्यभिज्ञानमित्यक्षरार्थः पर्य-
वस्यति । अन्यथानन्वयापत्तेः । विशेषेति । अत्र विशेषपदं
संपातायातं गुणत्वनिषेधेनैवेष्टसिद्धेः । ग्राह्यत्वादित्यत्र प्रत्य-
क्षत्वार्थकत्व आह—अत्रेति । तत्समभिव्याहारेणैव प्रत्य-
क्षत्वप्राप्तिरिति तु सम्यक् । मनस इति । आत्मगुणग्राहके-
न्द्रियस्य मनस्त्वादित्यर्थः । ननु शब्दो न दिगादिगुणः तेषां
विशेषगुणरहितत्वादित्यत्र व्यधिकरणत्वमत आह—प्रयागे
इति । तेषां दिगादीनाम् । तत्त्वव्याघातः विशेषगुणराहि-

स्यव्याघातः । धर्मिग्राहकेणेति संपातायातं तेन विशेषगु-
णत्वस्याप्रतिक्षेपात् । प्रमाणेनेति तु सम्यक् विशेषगुणत्वेन
क्लृप्तानां तत्र प्रमाणेन बाधात् । ननु शब्दः अष्टद्रव्यातिरि-
क्तद्रव्याश्रितः इति भाष्यं न संभवति साध्याप्रसिद्धेरत आ-
ह—शब्दाश्रयत्वेनेति । एकत्वेनाकाशत्वजातेरभावादि- 110.10-11
त्यर्थः । ननु व्यतिरेकोऽनुपपन्नः पृथिव्यादिभ्योऽव्यावृत्ते
पृथिव्यादौ शब्दसमवायादत आह—यथा पृथिव्यादिष्वि-
ति । ननु परिशेषे प्रसक्तप्रतिषेधानन्तरमन्यः साध्यते न चात्र
सा रीतिरस्तीत्यत आह—सोऽयमिति । अत्र परिशेष-
शब्दो व्यतिरेकपर इत्यर्थः । शब्दो द्रव्याश्रितः गुणत्वादित्य-
नुमाने भाष्यसंमतिरित्याह—तदिदमिति । एकत्वमपीति ।
तथाच व्यर्थोऽयं ग्रन्थ इत्यर्थः । न हीति । द्वित्वादौ समा-
नाधिकरणासमवायिकारणत्वादित्यर्थः । ननु द्वित्वादिकमेव
तत्र नास्तीत्यत आह—भवितव्यमिति । आकाशान्तर्भावेन
द्वित्वादिव्यवहार एव तत्र मानमित्यर्थः । अन्यथेति । अबा-
धितव्यवहारेणाप्यर्थासिद्धावित्यर्थः । तथापीति । तथाच न
भाष्यवैयर्थ्यमिति भावः । ननु नियतमेकत्वं कथं सिध्यति
प्रत्युत द्रव्यत्वेन पृथिव्यादिवदनेकत्वमेव सिध्यतीत्यत
आह—तच्चेति । यद्याकाशः किञ्चिद्देशवृत्तिः स्यात्तदा
देशान्तरे शब्दोपलब्ध्यर्थमाश्रयान्तरं कल्पयेत्, विभुत्वे त्वेके-
नैव सर्वदेशावस्थितशब्दोपपत्तावाकाशान्तरकल्पने गौरवम् ।
शब्दलिङ्गमेतावत्प्रतिसंधानासहकृतमेकत्वं न साधयतीति
चेत् । अनेकत्वस्याप्यसाधनात् । तथाच वैभवे एकत्वानेक-
त्वयोरविशिष्टं शब्दलिङ्गं लाघवादेकत्वमेव साधयती-
त्यर्थः । नन्वाकाशस्यैकत्वे तदात्मकस्य श्रोत्रस्य कथं

111-9-10 नानात्वमत आह—श्रोत्रेति । अदृष्टभेदात्तत्र भेदव्यवहार औपाधिक इत्यर्थः । पूर्ववदिति । नियतैकपृथक्त्वसाधनार्थं न ग्रन्थवैयर्थ्यमित्यर्थः । द्रव्यत्वेनेति । सामान्यसिद्धौ विशेषजिज्ञासायां तत्साधकप्रमाणावतारादित्यर्थः । ननु विभवः परममहत्परिमाणमेव, तथाचाभेदे कथं साध्यसाधनभाव इत्यत आह—विभव इति । ननु किमपि परिमाणमाकाशं माऽस्त्वत आह—अपरिमितस्येति । परिमाणराहित्ये द्रव्यत्वानुपपत्तौ तत्र संयोग एव न स्यात् कथं मूर्तसंयोग इत्यर्थः । भावप्रधान इति । एवंच परममहत्त्वपरिमाणमित्यर्थः । आत्वं तु धर्मिप्राधान्य एवेति भावः । अथवेति । एवंच सामानाधिकरण्याभाव इति भावः । यद्वा, ननु परममहत्परिमाणमिति सामानाधिकरण्यमनुपपन्नं परममहच्छब्दस्य द्रव्यवाचकत्वात्, अत आह-भावप्रधान इति । एवंच भावप्राधान्ये सामानाधिकरण्यमुपपन्न एवेति भावः । यद्वा, तथा प्रयोक्तुर्भाष्यकृतः प्रयोगाशुद्ध्यापत्त्या सामानाधिकरण्यं न विवक्षितमेवेत्याह—अथवेति । एके तु भावप्रधानं कृत्वा पृथक्पदत्वेनात्वाभावं वदन्ति । तन्न, पृथक्पदत्वधर्मिपरत्वेनाप्युपपत्तौ तावदायासवैयर्थ्यात् । प्रश्नः—अथेति । उत्तरं—स्पर्शेति । मनसि व्यभिचारवारणाय-प्रत्यक्षेति । घटादौ सत्यन्तम् । अनुकूलं तर्कमाह—अन्यथेति । अविभुत्वमणुतायां मध्यमपरिमाणवत्तायां वा । आद्ये प्रत्यक्षगुणवत्ता न स्यात् । द्वितीये आरब्धत्वनैयत्ये निःस्पर्शत्वानुपपत्तिरित्यर्थः । यदीति । आद्यशब्दं प्रति शब्दस्याजनकत्वादित्यर्थः । यद्यपीति । शब्दो द्रव्याश्रितः गुणत्वादस्मादित्यर्थः । विप्रतिपन्ने बाधकमाह—गुणवतोऽपीति । अतिव्याप्ते-

रित्यर्थः । आश्रयैकेति । समवायवत्त्वे सत्यसमवेतत्वादि- 112-11 त्यर्थः । समवाये व्यभिचारवारणाय सत्यन्तम् । गुणादौ व्यभिचारवारणाय विशेष्यभागः । अन्यथा असमवेतत्वमात्र-हेतुत्वे । स्वरूपेति । गुणकर्मसामान्यविशेषाणां समवेतत्व-नियमात् समवायादौ समवायाभावादित्यर्थः । एवं च साध्याभावे हेतुस्वरूपमेव न स्यादिति भावः । पूर्वं कार्यत्वे । पश्चादनित्यत्वे । तेनेति । अभेदे कार्यकारणभावाभावादित्यर्थः । कारणेति । गन्धादिमदारब्धे गन्धादिमत्त्वदर्शनादित्यर्थः । स्पर्शेति । आरब्धे घटादौ स्पर्शदर्शनेन निःस्पर्शस्यानारम्भकत्वनियमादित्यर्थः । सर्वसाधारणतामेवाह—व्यापकत्वादीति । आकाशस्यापीति । निःस्पर्शत्वादित्यर्थः । पुनरिति । घ्राणादौ पृथिव्यादिकार्यत्वं, प्रकृते त्वाकाशस्वरूपत्वमात्रमित्यर्थः । श्रवणश्रोत्रयोः पर्यायत्वे विवरपदे वैयर्थ्यमाशङ्क्याह—श्रवण इति । ननु देशोऽवयवो न च स नभसोऽस्त्यत आह—अव्याप्येति । यस्याप्यवयवः सोऽपि संयोगवान्नभोऽपीति तत्र देशव्यपदेशो गौण इत्यर्थः । एवमिति । यथा मृतशरीरावच्छेदेन न सुखाद्युत्पत्तिरदृष्टविशेषाभावात् तथा बधिरोऽपि न शब्दं गृह्णात्यदृष्टविशेषविलम्बादेवेत्यर्थः । एतत् अदृष्टविलम्बाद्बाधिर्यम् । अन्यथेति । भेषजेन नादृष्टं जन्यते किन्तु मलापकरणमेव क्रियते, तथाच ततोऽपि बाधिर इत्यर्थः ।

इति आकाशनिरूपणम् ।

परापरस्वरूपेण द्रव्येण कथं कालानुमानमत आह—भावप्रधान इति । व्यतिकरः विशेषः । तदेवाह—दिक्कृताभ्यामिति । प्रत्ययशब्दस्य द्वन्द्वान्तर्गतत्वं न तु

द्वन्द्वान्ते श्रूयमाणत्वं, तेन न परत्वापरत्वयोरन्वय इत्याह–
114.1 परेति । समासः विग्रहः । नन्वजन्याभ्यां परत्वापरत्वाभ्यां कथं कारणतया कालस्यानुमानमत आह–परत्वेति । ननु परत्वं द्रव्याश्रितं गुणत्वादित्यनुमानेन कालसिद्धिर्न संभवति तस्य कालावृत्तित्वादत आह–ते इति । तथानुमानाभावेऽपि प्रकारान्तरेणानुमानमित्यर्थः । प्रकारान्तरं न संभवतीत्याह–कथमिति । प्रकारान्तरं दर्शयति–बहुतरेति । अल्पकालीनापेक्षया बहुकालीने परत्वमुत्पद्यते । तद्भावकार्यत्वादसमवायिकारणापेक्षम् । न च रूपरसगन्धास्तथा बाधाबभावात् । नापि स्पर्शः तदसमवायिकारणकत्वे तत्र स्पर्शत्वापत्तेः । एवं च रूपादौ व्यभिचारोऽन्वयव्यभिचारोऽकारणत्व परत्वादौ रूपत्वाद्यापत्त्या द्रष्टव्यम् । सूर्यकर्मणश्च न समवायिकारणप्रत्यासत्तिरिति सूर्यसंयुक्तद्रव्यसंयोगोऽसमवायिकारणमित्याशयः । ननु पृथिव्यादिस्तथा भविष्यतीत्यत आह–न चेति । व्यभिचारादिति । पृथिवीसंयोगं विनाप्यन्तरिक्षे परत्वोत्पत्तिः । एवं जलादिसंयोगव्यभिचारोऽपीत्यर्थः । तत् असमवायिसंयोगवत् । विभिन्नेति । तस्यान्तरिक्षादिगते परत्वाश्रये सर्वत्र संबन्धादित्यर्थः । तथा असमवायिकारणसंयोगाश्रयौ । पृथिव्यादिसंयोगो न पृथिव्यादीनां विशेषगुणवत्त्वादहेतुः, तस्य हेतुताप्रयोजकत्वे विशेषगुणराहित्यं हेतुता प्रयोजकं स्यात्, तथा च मनःसंयोगो हेतुः स्याद् व्यभिचारात् । सूर्यगत्या संयुक्तसमवायलक्षणप्रात्यभावाच्च मनो न हेतुरिति यदि तदा पृथिव्यादीनामप्यहेतुत्वे तदेव प्रयोजकमिति तद्विरहिण आकाशादेः संयोगस्य किमिति न हेतुत्वमित्याह–अत्रेति ।

आकाशादि परत्वासमवायिकारणसंयोगवत् विशेषगुणव-
त्त्वात् पृथिवीवदित्यत्र सूर्यगतिप्राप्तिविरह उपाधिः पृथिव्या-
दौ साध्यव्यापकत्वात् आकाशादौ साधनाव्यापकत्वा-
दिति भावः । ननु पिण्डासंबद्धे सूर्यसंबद्धे कस्मिंश्चिद् द्रव्ये
साध्याव्यापकता, तथाच कथमुपाधिरित्यत आह-**विशेषेति**।
अनुकूलतर्काभावान्नानुमानमित्यर्थः। **अव्यापकत्वादिति**। 111.17
एतावता व्यभिचारित्वं गतिप्राप्तिविरहश्चोक्त इति द्रष्ट-
व्यम् ।

अयमेतदपेक्षया बहुतरतपनपरिस्पन्दावच्छिन्नजन्मेति
धीः परत्वकारणम्, अयमेतदपेक्षयाऽल्पतरतपनपरिस्पन्दा-
वच्छिन्नजन्मेति धीश्चापरत्वकारणम् । अवच्छिन्नत्वं च
संबद्धत्वम् । न च सूर्यगतिः साक्षात्पिण्डसंबद्धा, नापि
संयुक्तसमवायः संभवति पिण्डसूर्ययोः संयोगाभावात् ।
तथाच संयुक्तसंयुक्तसमवायो वाच्यः पृथिव्यादिषु यत्पिण्ड-
प्राप्तं तन्न सूर्यसंबद्धं यत्सूर्यसंबद्धं तन्न पिण्डप्राप्तमित्यप्राप्तिः ।
किञ्चित्सौरं तेजः पिण्डसूर्योभयसंबद्धमस्तीति चेन्न । क्वचि-
त्पिण्डे तथा भावेऽपि भूनिखातादौ तदभावेन व्यभिचारः ।
एवं चैतादृशमेकं द्रव्यं स्वीकार्यं यद्यावत्पिण्डसूर्यसंबद्धं, न
चाकाशात्मानौ तथा विशेषगुणवत्त्वादित्याह—**विप्रकृष्टबु-
द्धिमिति**। अपेक्षेत्यनेनान्वयाद्यनुविधानं कारणत्वे प्रमाणमा-
दर्शितमेष संबन्धः स्वरूपतः साक्षात् संबन्धाभावात् सा-
क्षात्संबन्धस्य बाधितत्वात् । **यद्द्वारेणेति**। यद्घटितः
प्रकृतसंबन्धस्तद् द्रव्यमस्तीत्यर्थः । अत्राप्यप्रयोजकतामा-
ह—**नन्विति**। ननु निरुपाधित्वमेवानुकूलस्तर्क इत्यत आ-
ह—**अप्राप्तीति**। यत्र यत्र पिण्डसूर्यगतिसंबन्धाघटकत्वं

तत्र तत्रोभयप्राप्तिविरह इति पृथिव्यादौ साध्यव्यापकता
आकाशादौ च साधनाव्यापकतेत्यर्थः । ननु साध्यप्रयो-
जको धर्म उपाधिः साध्ये च नाप्राप्तिः प्रयोजिकेत्यत आह—
115.11 अन्यथेति । अप्राप्तेन प्रयोजकत्वे विशेषगुणवत्त्वं प्रयोजकं
वक्तव्यम् । साध्यप्रयोजकत्वं च साध्यसमव्याप्तिः, एवं च व्याप-
कत्वेन नाप्रयोजकता । न च स एवोपाधिः साधनव्यापक-
त्वादिति हि भवतोऽभिप्रायः । न चैष युज्यते विशेषगुणव-
त्त्वस्य साध्यव्यापकत्वे यत्र विशेषगुणाभावस्तत्र साध्याभाव
इति व्यतिरेकव्याप्तिरपि स्यात्, न चैतदस्ति मनसि व्यभि-
चारादित्याशयः । विशेषेति । यदि विशेषगुणवत्त्वमेवा-
घटकत्वे प्रयोजकं स्यात्तदा मनो घटकं स्यादेव तच्चाप्राप्ते-
रघटकमिति । नभःप्रभृति घटकमेवेत्याशयः । यद्याकाशः
स्वघटितसंबन्धेनान्यधर्ममन्यत्र प्रापयेत्तदा भेर्यन्तरस्थितम-
भिघातमन्यभेरीषु प्रापयेत् व्यापकतया दण्डसंयुक्तदण्डासंयु-
क्तभेरीष्वाकाशस्य संबद्धत्वात् । एवं च सर्वभेरीषु दण्डसंयोगसं-
बन्धे सर्वत्र शब्दोत्पत्तिः स्यात् । तथा चाकाशस्य क्रियोपना-
यकत्वेऽयमतिप्रसङ्गः । न च कालस्यापि तत्त्वे तथात्वं तस्य
क्रियामात्रोपनायकत्वात् धर्मिग्राहकमानेन तथैव तस्य सिद्धेः ।
आकाशस्य तु न धर्मिग्राहकमानेन तथासिद्धिरिति क्रियो-
पनायकत्वे संयोगोपनायकत्वमपि स्यादित्याह—आकाश-
स्येति । तत्स्वभावत्वादिति । क्रियामात्रोपनायकत्वं
कालस्य स्वभाव इत्यर्थः । अन्योपनायकत्वप्रसञ्जनं काला-
सिद्धिदशायां न संभवत्येव धर्मिण एवासिद्धेः । सिद्धिदशा-
यामपि न संभवति तन्मात्रोपनायकत्वेनैव धर्मिग्राहकमा-
नात्सिद्धेरित्याह—असिद्धीति । आत्मापि स्वघटितसंनि-

कर्षेण न धर्म्यन्तरधर्मं धर्म्यन्तरे प्रापयति अतिप्रसङ्गादिति
परघटितसंबन्धेन प्रत्येति परमित्याह—आत्मनोऽपीति । 115.20
अन्यथेति । पिण्डसूर्यक्रिययोरिव नीलस्फटिकयोरप्यात्म-
द्वारकसंयुक्तसंयुक्तसमवायाविशेषादित्यर्थः । कालस्य त्वि-
ति । न चात्मनो धर्मिग्राहकेण तथासिद्धिरिति भावः ।
तदनुविधायित्वात् अत्रानन्यथासिद्धतदनुविधायित्वादि-
त्यर्थः । अन्यथासिद्धस्य जनकत्वाभावात् । स्थविरेति ।
परम्परास्थविरशरीरसंबद्धा इत्यर्थः । स्वभावत इति ।
साक्षादसंबद्धत्वे सतीत्यर्थः । प्रकारान्तरेति । द्रव्यकृतप्र-
त्यासत्तिभिन्नप्रत्यासत्तित्वादित्यर्थः । नातः श्रोत्रशब्दत्वयोः
प्रत्यासत्तौ व्यभिचारः । अन्यथेत्यस्य व्याख्यानं संनिक-
र्षेति । विशिष्टेति । विशिष्टमनया रीत्या यत्परत्वानुमेयं
तत इत्यर्थः । ननु विशिष्टं दिक्कृतभिन्नं यत्परत्वं तदनु-
मेयत्वादित्यर्थः । तेनाश्रयान्यत्वादेरप्यनुमानसंभवादिति
भावः । ननु कालस्यैकत्वात्कथमनेककालता कथं वा तस्य
दीर्घस्याल्पत्वमत आह—अत्रेति । तेषां यौगपद्यादीनाम् ।
नाद्य इति । कारणान्तरासंभव एव तस्य कारणतया सिद्धे-
रित्यर्थः । तस्येति । रूपादेरभावादित्यर्थः । ननु तेषां
विषयेष्विति भाष्येण विषयत्वमेव कालस्य प्राप्यते तथा
प्रापकस्य विषयशब्दस्य सत्त्वात्, विषयेष्विति बहुवचना-
संगतिश्च कालस्यैकत्वात्, विषयतया सिद्धिमभिधाय निमि-
त्ततया सिद्धिकथनं च व्यर्थमत आह—घटपटादिष्विति ।
द्रव्येति । द्रव्यमिदं गुणोऽयमित्यादिप्रत्ययविलक्षणानामि-
त्यर्थः । एवं च तत्कारणविलक्षणकारणसिद्धिरिति भावः । वै-
लक्षण्यं साधयति—द्रव्यादीति । यज्जातीयासत्त्वकाले यो

भवति स तद्विजातीय इत्यर्थः । स्वरूपसत् कार्यवैलक्षण्यं न
117.5 विलक्षणकारणानुमापकमत आह-विनिश्चितानामिति ।
अन्यस्य विलक्षणस्येति शेषः । तेन नात्मादिसत्त्वादनुपप-
त्तिः । ननु कस्माच्चित्कालोऽप्यन्यो भवतीत्यत आह-काल-
मिति । प्रमारूपा विशिष्टप्रतीतिर्विशेषणसंबन्धसापेक्षा ।
न च क्रियया घटादीनां साक्षात्संबन्ध इति संबन्धघटक-
तया कालसिद्धिरित्याह—एत इति । न चेति । अप्रामानां
विशेषत्वेऽतिप्रसङ्ग इत्यर्थः । स्वरूपेण साक्षात् । विशिष्ट-
प्रत्ययः तत्प्रमा । विशेषणप्रापकमिति । विशिष्टप्रमायां
संबन्धस्यावश्यकतया साक्षात्संबन्धाभावे परम्परासंबन्ध-
पर्यवसाने घटकस्यान्यस्याभावे द्रव्यरूपघट कासिद्धिरिति
भावः । ननु संबन्धावश्यकत्व एतदुपपद्यते तदेव नास्ती-
त्यत आह—अन्यथेति । विशिष्टप्रत्ययस्य प्रमात्वे
विशेष्ये विशेषणसंबन्धसत्ता बीजम् । एवं च संबन्धा-
सत्त्वे प्रमात्वमेव न स्यादिति भावः । एवं च विशिष्ट-
प्रत्ययेन संबन्धसिद्धौ तद्घटकतया द्रव्यसिद्धिरिति सिद्धम् ।
अत्र भ्रान्तस्यान्योन्याश्रयशङ्कामपाकरोति—न चेति । मा
चेत्यम् । संबन्धज्ञाने सति विशिष्टप्रत्ययस्तज्ज्ञानस्य विशि-
ष्टप्रत्ययकारणत्वात्, विशिष्टप्रत्यये च सिद्धे तदन्यथानुप-
पत्त्या संबन्धसिद्धिः साधकान्तरस्याभावात् । तत्साधक-
तया प्रकृतेऽन्यस्यानुपन्यासादिति । विशेषणज्ञानं कारणं
न तु तत्संबन्धज्ञानमिति समाधत्ते-न हीति । तथा च
संबन्धस्याविशेषणत्वेन तज्ज्ञानं न कारणमिति नान्योन्या-
श्रय इति भावः । ननु तर्हि विशिष्टप्रत्ययान्यथानुपपत्त्या
संबन्धसिद्धिः कथं तज्ज्ञानस्य विशिष्टप्रत्ययेऽनुपयोगादिति

चेत् । तज्ज्ञानस्यानुपयुक्तत्वादनुपपत्तया तन्मा सिध्यतु सं-
बन्धः सिध्येदेवोपयुक्तत्वात्, विशेषणसंबन्धं विना विशि-
ष्टप्रत्ययस्य प्रमात्वानुपपत्तेरिति हृदयम् । नन्विति । येना-
न्योन्याश्रयः स्यादिति भावः । यदि संबन्धज्ञानं विशिष्ट- 117.15
बुद्धौ कारणं तदा समवायातीन्द्रियत्ववादिनां गुणादिवि-
शिष्टप्रत्ययो न स्यादित्याह- अन्यथेति । विशिष्टप्रतीतेः
पूर्वं समवायाभानादिति भावः । परेषामिति । अहं शरी-
रीति विशिष्टबुद्धौ न संयोगो नियामकस्तस्य शरीरान्तर-
साधारण्यात् किन्त्वदृष्टं, तथा च नैयायिकानां शरीरात्मनोः
संबन्धस्यादृष्टस्यातीन्द्रियस्य ज्ञानाभावेऽपि यथा विशिष्ट-
बोधस्तथा प्रकृतेऽपीत्यर्थः । यद्यपि शरीरात्मनोः संयो-
गोऽप्यतीन्द्रियः संबन्धिनोरेकेन्द्रियाप्रत्यक्षत्वात् तथापि
वस्तुगत्यभिप्रायेणेदमुक्तम् । एवं च विशेषणसंबन्धसिद्धेर्वि-
शिष्टप्रत्ययाधीनत्वेऽपि विशिष्टप्रत्ययस्य विशेषणसंब-
न्धज्ञानसाध्यत्वाभावान्नान्योन्याश्रय इत्युपसंहरति तस्मा-
दिति । ननूत्पत्त्यादित्रयगर्भत्वे वैयर्थ्यमत आह- यत्तादिति
एतावता निखिलकार्यकारणत्वं पूर्वोक्तं स्मार्यते न तूत्प-
त्त्यादित्रयगर्भं लक्षणं क्रियते येन वैयर्थ्यमिति भावः । ननूत्प-
त्तिराद्यक्षणसंबन्धः, क्षणश्चोत्पन्नं द्रव्यं यावद्गुणमेतेष्वेकः
तस्य चाद्यत्वं स्वसमानकालीनपदार्थप्रतियोगिकध्वंसाना-
धारत्वं द्वितीयादिक्षणे स्वस्य घटादेरुत्पत्तिकाले समानका-
लीनेषु पदार्थेषु कस्यचिदवश्यं ध्वंसात् तस्मिन्नेव क्षणे समा-
नकालीनस्य च तस्मिन्नेव क्षणेऽध्वंसात् एवं चाद्यक्षणशरीरे
कालस्य प्रविष्टत्वात् तस्य चाजन्यतया स्वरूपसंबन्धा-
त्मकतत्संबन्धरूपायामुत्पत्तौ कथं जन्यत्वमत आह- उत्प-

त्तिरिति । आद्यक्षणसंबन्धप्रविष्टः कार्यरूपः संबन्ध एव
118.3 प्रकृत उत्पत्तिरेवेति भावः । ननु स्थितिरपि कालसं-
बन्धरूपतया पूर्वन्यायेनाजन्येत्यत आह— स्थितिरिति ।
तस्याजन्यत्वेऽपि सहकारिसंबन्धः संयोगरूपो जन्य एवे-
त्यर्थः । एष च यत्र संबन्धस्य संयोगता तत्रैव जन्यो न
रूपादौ सहकारिसंयोगरूपा स्थितिः संभवतीति भावः ।
विनाशस्य तु प्रध्वंसात्मकस्याखण्डतया कालाद्यगर्भतया
जन्यतायां न काप्यनुपपत्तिरित्यभिप्रेत्याह—विनाश इति ।
एतावता पूर्वोक्तमनेन स्मारितं न तु लक्षणमिदं दिगादाव-
तिव्याप्तेरित्याशयः । ननु व्यपदेशेन कथं कारणत्वसिद्धिरत
आह-यथेति । उत्पत्त्यधिकरणतया प्रतीयमानस्य कारणत्वं
प्रागुक्तमित्यर्थः । उत्पन्नमिति । अत्र लक्षणद्वये तात्पर्यं
उत्पत्त्यवच्छिन्नद्रव्यावच्छिन्नः काल इत्येकं, तत्र चात्माश्रय
उत्पत्तौ क्षणस्य प्रवेशात् उत्पत्तेरेकक्षणमात्रावस्थायितया
तदवच्छिन्नकालस्यैव क्षणत्वे संभवति द्रव्यपदवैयर्थ्यं चेत्यतो
गुणानवच्छिन्नद्रव्यावच्छिन्नः काल इत्युक्तमिति वस्तुगतिः ।
लक्षणैक्ये तु वैयर्थ्यमिति भावः । उत्पन्न इति । पटप्राग-
भावावच्छिन्नोऽन्त्यतन्तुसंयोग इत्यर्थः । अन्त्यतन्तुसंयोगे
सति द्वितीयक्षणे पटस्यैवोत्पत्तेः न तूत्पन्न इत्यपि देयम्
आत्माश्रयाद्वैयर्थ्याच्चेति भावः । उत्पन्न इति । विभाग-
प्रागभावावच्छिन्नं कर्मेत्यर्थः । कर्मोत्पत्त्यनन्तरं द्वितीयक्षणे
विभागस्यैवोत्पत्तेः न तूत्पन्न इत्यपि देयम् आत्माश्रयवैय-
र्थ्याभ्यामिति भावः । अथवेति । अत्र कार्यरहितेति व्यर्थं
सामग्र्याः स्वत एव क्षणमात्रावस्थायित्वादिति भावः ।
अक्षीति । अन्यकर्मणामेतत् समानकालीनत्वेऽपि निमेषत्वेन

व्यवहाराभावादित्याशयार्थः । नन्वितरेषां किं लक्षणमत आह—इत्यादीति । धर्मीति । यद्यपि धर्मिग्राहकमानेन 118.11
संयोगाश्रयतयैव कालः सिध्यति न तु संख्याद्याश्रयतया तथापि तदुपजीवनेन साधयितुं शक्यतयाभिधानं तथेति भावः । व्यापकतयेति । अनुपपन्नं स्वोपपादकमेव कल्पयतीत्यर्थः । पूर्ववदिति । नियतैकपृथक्त्वसिद्धय इत्यर्थः । विशिष्टेति । संयुक्तसंयुक्तसमवायेन संबन्धेन सूर्यगतिर्मूर्तमात्रे प्रतीयते । न च कालस्य सकलमूर्तसंयोगित्वलक्षणं विभुत्वं विनैतदुपपद्यते, न च महत्परिमाणं विना तत्संभवतीति भावः । ननु सूत्रे कारणपरत्वादेर्हेतोः काले परत्वापरत्वसाधकत्वं प्रतीयते, न चैतदुपपद्यते काले परत्वादेरनभ्युपगमात् संयोगासिद्धिप्रसङ्गाच्च, कारणपरत्वादेश्च हेतुत्वमनुपपन्नं साध्याविशेषात्कारणपदवैयर्थ्याच्चेत्यत आह—कारणमिति । परत्वादिकारणत्वात् कालस्य संयोगवत्त्वमनुमेयमित्याशयः । ननु संयोगस्याश्रयनाशोऽपि विनाशक इति कथं ततो विभागसिद्धिरत आह—सत्याश्रय इति । द्वित्वादीति । दिक्कालौ द्वाविति प्रतीतिबलाद् द्वित्वाद्यावश्यकमित्यर्थः द्विपृथक्त्वादीति । असमवायिकारणाभावादित्यर्थः । वैभवेति । तस्य च सर्वमूर्तसंयोगित्वलक्षणस्य विश्ववर्तिपरत्वाद्यनुरोधेनावश्यकत्वादित्यर्थः । असमवायीति । कालपिण्डसंयोगस्यासमवायिकारणत्वात् कालसूर्यसंयोगस्य निमित्तत्वादित्यर्थः । धर्मीति । सा च प्रत्यासत्तिर्द्रव्यकृतेत्यनेन धर्मिग्राहकेण द्रव्यत्वेन कालस्यापि सिद्धेरित्यर्थः । एकत्वादिति । अनित्यस्यैकतायां ततः पूर्वं पश्चाद्वा परत्वादि न स्यादित्यर्थः । समानेति । अकार्य-

120.10 तया नित्यत्वं, तच्चाकारणकत्वादित्यर्थः । **त एव भावा इति** । तेऽतीतादयो भावा एव कालस्वरूपा एव न तूपाधिस्वरूपा इति भिन्नक्रमेणैवकार इत्येके । त एव क्षणादय एव भावा उपाधय इत्यन्ये । यदि तेऽप्युपाधिभेदास्तैरेव व्यवहारोपपत्तौ कालसिद्धौ न प्रमाणमित्याह–**भावे चेति** । ननु स्थितिनिरोधयोर्वर्तमानातीतोपाध्योः प्राप्तावपि भविष्यदुपाधिः प्रागभावो न प्राप्त इत्यत आह—**प्रारम्भ इतीति** । आद्या कृतिरारम्भः, स च प्रागभावं लक्षयति, तत्र च संनिकृष्टम् इत्यनेन संबन्ध उक्तः प्रागभाववत एवारम्भात्, एकाधिकरणप्रत्यासत्तिरूपः संनिकर्षो लक्ष्यलक्षकयोरित्यर्थः । ननु प्रारम्भस्थितिनिरोधा एवोपाधयः, क्रियाभिनिर्वृत्तिपदं किमर्थमत आह–**क्रियेतीति** । क्रियापदेन व्यापारलक्षणो धर्मो गृहीतः, अभिनिर्वृत्तिपदेन फलसिद्धिस्तया च धर्म्युपलक्ष्यते, एवं च धर्मधर्मिणोः प्रागभावस्थितिनिरोधाः । भविष्यत्ताद्युपाधय इति भविष्यत्तादयो द्विविधा इत्याशयः । अनयोर्द्वयोरनुपादाने द्वैविध्यं न स्पष्टं प्राप्येतेति हृदयम् । अत एवाग्रे तेनेत्यादि वदिष्यति । ननु निरोधपदेन यदि प्रतिबन्धो गृह्यते तदातीतोपाधिर्न प्राप्यत इत्यत आह—**निरोध इतीति** । धर्मिणः प्रागभावेन भविष्यत्तामाह—**भविष्यतीति** । **पटमिति** । धर्मी कुविन्दो यद्यपि वर्तमानस्तथापि तद्धर्मस्य व्यापारस्य प्रागभावोऽस्तीत्यर्थः । **एवमिति** । पटस्य धर्मिणः प्रागभावकालेऽभावेऽपि तदनुगुणव्यापाररूपधर्मसत्तया वर्तमानत्वमित्यर्थः । **स्मारयतीति** । पूर्वानुभवकर्मणोरभावेऽपि संस्काराद्दृष्टलक्षणव्यापारसत्तया वर्तमानत्वव्यवहार

इत्यर्थः । एवमिति । पटकुविन्दयोर्धर्मिणोरवस्थानेऽपि 121.7
व्यापारध्वंस एवातीतोपाधिरित्यर्थः । ननूक्तोपाधिसत्त्वे किं
कालेनेत्यत आह—न चैव इति । यदेति । मध्याह्नार्थ-
रात्र्योर्भिन्नदेशावच्छिन्नयोरेकमधिकरणं प्रतीयते, न च प्रकृ-
तप्रतीतिविषयोऽधिकरणं कालभिन्नं संभवतीति तस्याव-
श्यकतया तदसापेक्षकारणतयाप्युपपत्तौ नोपाधीनां तत्र तद्-
नपेक्षाणां कारणत्वं सर्वथाननुगतत्वाभावेऽनुगतस्य कारणत्वे
संभवत्यननुगतोपाधिमात्रस्य कारणत्वासंभवात् । एवं चास्ति
क्षणादिव्यवहारेष्वनुगतत्वं कालव्यवहारत्वेन, अस्ति चान-
नुगतत्वं क्षणादिव्यवहारत्वेन । एवं चानुगततया तत्र कालः
कारणम् अननुगततया च स उपाधिरित्यतीताद्युपा-
धिसत्त्वेऽपि न तेनैवान्यथासिद्धिरिति भावः । नन्वय-
मपि व्यवहार उपाधिनैव स्यादिति किं कालेनेत्यत आह—
इत्यादामिति । भिन्नदेशावच्छिन्नस्य मध्याह्नादेरेकोपा-
धिसंबन्धो न घटकं कालं विनेति घटकतया काल आव-
श्यक इत्यर्थः । प्रमाणाभावात्संबन्धो न संभवतीत्युक्तमिति
भ्रान्त आह—बौद्ध इति । प्रतीतेरेव प्रमाणत्वान्न संब-
न्धासंभव इत्यर्थः । सत्यमिति । बुद्धिर्हि संबन्धे प्रमाणं,
संबन्धस्वरूपनिर्वाहकतया तु प्रकृते कालः स्वीक्रियत इत्यर्थः ।
निमित्तमिति । सूर्यक्रियादिर्हि उपाधिस्तत्संबन्धघटकः
काल इत्यर्थः । न चौपाधिक इति । पाचकादिव्यवहार-
स्याभ्रान्तत्वायौपाधिकत्वं न भ्रान्तत्वप्रयोजकतयेष्टव्यं किन्तु
विशेष्यावृत्तिप्रकारकत्वं, स्फटिके नीलादिप्रत्ययो विशेष्या-
वृत्तिप्रकारकः न तु पाचकादिप्रत्ययः । एवं च कालेऽपि
प्रत्ययो विशेष्यावृत्तप्रकारकत्वान्न भ्रम इत्यर्थः । औपाधि-

क इत्येतावतैव चेद् भ्रान्तः स्यात् तदा पाचकादिप्रत्ययोऽपि भ्रान्तः स्यात्, स मा भूदिति व्यधिकरणप्रकारकत्वमेव तत्प्रयोजकतयाङ्गीकर्तव्यं, तच्च प्रकृतप्रत्यये नास्तीत्याशयः ।

122.3 अतस्मिन्निति । तद्भिन्ने तद्भेदावगाहीत्यर्थः ।

इति कालनिरूपणम् ।

ननु कालकृतविलक्षणपरत्वादिलिङ्गत्वं दिशः कुतो नोक्तमत आह—गुण इति । पूर्वापरादिप्रत्ययलिङ्गत्वं तत्र न प्राप्यत इत्यत्रोच्यत इति भावः । पूर्वं प्रति किञ्चिद्देशा++तायामवधित्वं न च व्यापकस्तथेत्यभिप्रेत्याह—अमूर्तेति । यद्दिगवस्थित्या यः पूर्वत्वेन व्यवह्रियते तद्दिगवस्थित एव तत्रावधिः संभवतीति नेति भावः । न ह्यवधिसमानदेशस्तदवधिकपूर्वत्वाश्रय इति तत्रापि व्यापको वारणीय इत्यभिप्रेत्याह—व्यापकत्वादेवेति । ननु पूर्वेणेत्यादौ तृतीया न संभवति कर्तृत्वकरणत्वयोस्तदर्थयोरभावात् कार्याप्रतीत्या कर्तृत्वादेर्बाधितत्वादत आह—पूर्वेणेति । करणत्वाद्यर्थिकेयं तृतीया न भवति येनानुपपत्तिः स्यात् किन्तु यत्र प्रकरणे तृतीयाविधानं कृतमस्ति तत्र प्रकृत्यादिभ्य उपसंख्यानमित्यनेनापि तृतीया विहितास्ति, प्रकृतिप्रभृतिशब्देभ्यः सेयं तृतीया भवतीत्यर्थः । विधायकस्य तु प्रकृत्यादिभ्यः शब्देभ्य उपसंख्यानं तृतीया वाच्येत्यर्थः । एवं च तृतीयाविधाने तृतीयाविधानप्रकरणे प्रकृत्यादिभ्यः उपसंख्यानमिति या तृतीया विहिता सा दक्षिणेनेत्यादौ भवतीत्यन्वयः । ननु करणत्वादेस्तदर्थत्वाभावे प्रकृते कीदृगर्थप्रत्यय इत्यत आह-पूर्वामितीति । एवं चैतस्मादिदं पूर्वेणेत्यस्यैतस्मादिदं पूर्वमित्यर्थ इति भावः । नन्विति ।

कार्यत्वेन हेतुना सकारणकत्वमात्रं सिध्यति, दिक्सिद्धिस्तु नान्यनिषेधं विनेत्यर्थः। अन्यनिषेधं करोति—अन्येषामिति। 123.1
न हि यस्मिन्मूर्ते एतस्मादिदं पूर्वमिति प्रत्ययो भवति तत्स्वरूपं द्रव्यमेव तद्गुणो वा तत्र कारणं तत्र प्रतीचीत्यत्व-प्रत्ययदशायामपि द्रव्यस्वरूपस्य गुणस्वरूपस्य च तादव-स्थ्येन पूर्वत्वप्रत्ययाभावात्। एवं चान्वयव्यभिचारः तन्मू-र्ततद्गुणौ विना मूर्तान्तरेऽपि तत्प्रत्ययोत्पत्त्या व्यतिरेक-व्यभिचारश्चेत्येतदतिरिक्तं कारणमित्यर्थः। प्रथमेति। एतदपेक्षयेदं पूर्वमेतस्य हि संनिहितादित्यसंयोगावच्छि-न्नमित्यर्थः। एतदपेक्षयेदं पश्चिममित्यस्य तु संनिहितचर-मादित्यसंयोगावच्छिन्नमित्यर्थः। न चोदयाचलादिषु वर्त-मानः प्रथमचरमादित्यसंयोगो घटादौ विना संबन्धं विशि-ष्टप्रतीतिजननसमर्थः। न च साक्षात्संबन्धः समवायादिल-क्षणस्तेनास्तीति संयुक्तसंयुक्तसमवायघटकतया दिक्सिद्धि-रित्यर्थः। पृथिव्यादिस्तु न प्रकृतसंबन्धघटकोऽव्यापकतया विप्रकृष्टमूर्तैस्तयासंबद्धत्वादित्याह—न चाव्यापकेति। पूर्वकादे-वेति। तयोरतिप्रसङ्गभिया परधर्मानुपसंक्रामकत्वादित्यर्थः। काल इति। तस्य परधर्मोपसंक्रामकत्वस्य क्रियायां दृष्टत्वादि-त्यर्थः। कालस्येति। अन्यस्याप्युपनायकत्वेऽतिप्रसङ्ग एव स्यादित्यर्थः। अपि चायं व्यवहारो यदि कालकृतः स्यात् सर्वसाधारणः स्यात्। तथा च यथा वर्तमानः सर्वान् प्रति वर्तमानस्तथा प्राची सर्वान् प्रति प्राची स्यात्, न चैवं, कस्यचिदपेक्षया प्रतीचीत्वादित्याह—अन्यथेति। कालस्य प्रकृतोपनायकत्व इत्यर्थः। एकत्वं सर्वसा-धारण्यम्। प्राच्यादिव्यवहारे सर्वसाधारणत्वं नास्ती-

123.8 इत्याह—अस्माकमिति । कालकृते तु व्यवहारे सर्वसाधार-
णत्वमस्तीत्यत आह—न चैवमिति । कालो नासाधारणव्यवहा-
रजनक इत्यर्थः । तदेव स्पष्टयति—न हीति । सर्वप्रमातृणां
वर्तमानस्य वर्तमानत्वादेवेत्यर्थः । ननु कालजन्योऽपि
व्यवहारो न सर्वसाधारणः यस्यात्र दिवसत्वेन व्यवहारस्त-
स्यान्यत्र रात्रितया व्यवहारादित्याह—नन्विति । अत्रापि
व्यवहारो न केवलकालसाध्य इत्यसाधारणः अत्रान्यत्रेति
दिशः प्रवेशादित्याह—सत्यमिति । केवलकालव्यवहारस्तु
नासाधारण इत्याह—नन्विति । तथा असाधारणम् ।
साधारणत्वमेवाह—वर्तमानस्येति । दिग्व्यवहारेऽसाधा-
रणमाह—नन्विति । तस्मादिति । कालजन्यव्यवहा-
राद्विलक्षणो व्यवहारः कालविलक्षणनिमित्तमुपनयतीत्यर्थः ।
ननूपनेयोपाधिवैलक्षण्यादेव विलक्षणो व्यवहारो नोपनायक-
वैलक्षण्येन । अत एव कालकृतोऽप्यतीतादिभेदेन विलक्षणो
व्यवहार इत्याह—उपाधिरेवेति । यः क्रियासाध्यो व्यवहारः
स सर्वसाधारणः, संयोगसाध्यस्त्वसाधारण इत्यर्थः ।
सूर्यसंयोगस्येति । ननु प्रथमादित्यसंयोगेन प्राचीव्यवहा-
रश्चरमेण तु प्रतीचीव्यवहार इति कथं संयोगस्य साधार-
णत्वम्, एवं चातीताद्युपाधिभेदेन यथा कालेनातीतादिव्यव-
हारस्तथा प्रथमचरमसंयोगभेदेन प्राच्यादिव्यवहारः काले-
नैवास्तु किमर्थं दिगङ्गीकार इति चेन्न । कालः क्रियामात्रोप-
नायकत्वेन यदि सिद्धस्तदा कथं संयोगोपनायकः, अथ धर्ममा-
त्रोपनायकस्तदा तदातिप्रसङ्ग इति संयोगोपनायकस्य भिन्न-
स्य कल्पनात् सूर्यसंयोगस्य साधारणत्वात् । सूर्यसंयोगत्वेन

साधारणत्वात्कथं विलक्षणव्यवहारजनकत्वम्? न च तस्य प्राच्यादिविलक्षणव्यवहारजनकत्वे धर्मिग्राहकमन्यद्वा मानमस्ति। दिशस्तु धर्मिग्राहकादेवैकं प्रति प्राचीव्यवहारजन- 123.17
कत्वमपरं प्रति प्रतीचीव्यवहारजनकत्वं सिद्धमिति मूलाभिप्रायः। एतदेव कथमिति पूर्वपक्षेणोपनायकेति सिद्धान्तेन स्पष्टयति—दिशो हीति। ननु यदवधिका या प्राची सा सर्वान् प्रति तदवधिका प्राच्येव, न हि प्रयागावधिका प्राची काशी केनापि तदवधिकप्रतीचीत्वेन व्यवह्रियते। तथाच कथं प्रमातृभेदाश्रयः। न चैकप्रमातृशरीरापेक्षया या प्राची सा प्रमात्रन्तरशरीरापेक्षया प्रतीची भवतीति प्रमातृभेदाश्रय इति वाच्यम्। य इदानीमुत्पन्नप्रमात्रपेक्षया वर्तमानः स पूर्वोत्पन्नापेक्षया भविष्यन्नुत्पत्स्यमानापेक्षया चातीत इति कालस्थलेऽपि प्रमातृभेदेन व्यवहारभेददर्शनात्। न ह्यस्मदाद्यपेक्षयातीतो भारतसंग्रामो युधिष्ठिराद्यपेक्षया न वर्तमानः श्रीरामाद्यपेक्षया च न भविष्यन्निति संभवति। एकं वस्त्वेव प्राची प्रतीची भवति न तु वर्तमानोऽतीत इति चेन्न। एकस्यैव यथा दिगन्तरस्थत्वे प्राच्यां प्रतीचीव्यवहारस्तथा कालभेदेनैकस्यैवैकस्मिन् वर्तमानत्वास्पदेऽतीतताव्यवहारात्। न ह्येकैव प्रमा नैकं वस्तु वर्तमानत्वादिना न व्यवहरतीति चेन्न। पूर्वन्यायेन संयोगोपनायकतया दिक्स्वीकारात्। सा च युक्तिरपि चेत्यादिना मूल एव प्रदर्श्यते। एवं प्रमातृभेदमाश्रित्य, अन्यथा जन्याश्रित्य। अन्यथेति। उपनायकान्तराकल्पन इत्यर्थः। ननु संयोगोपनायकत्वेऽपि क्रियामात्रोपनायकत्वं नास्तीति संयोगकर्मणोरभेदादत आह—न चेति। संयोगकर्मणोर्भेदस्य सकलजनसिद्धत्वेन संयोगो-

पनायकत्वे कर्मातिरिक्तोपनायकत्वं कालस्य स्यादेवेत्यर्थः। तस्मादिति। उपनेययोर्भेदेनोपनायकयोरपि भेद इत्यर्थः।
124.9 उपाधीति। द्वारेणेत्यन्तम् आत्मादावव्यभिचाराय आत्मादीनां ज्ञानमात्रकारणत्वादिति। पिण्डसूर्यसंयोगसंबन्धघटकविभुत्वादिति हेत्वर्थः। विभुत्वादित्यनेन सूर्ये व्यभिचारवारणं तस्यापि संयुक्तसंयुक्तसमवायान्तर्गततया प्रकृतसंबन्धघटकत्वात्। यथाश्रुतस्तु हेतुरुपाधिपिण्डसंबन्धघटकत्वे सति तादृशप्रत्ययहेतुत्वादित्यर्थकः, तत्र यदि भास्करमपि संबन्धघटकत्वेन कारणं तदा तत्र व्यभिचारः स्यादेवेति तत्त्वम्। गुणकथनभाष्यवैयर्थ्यमाशङ्क्याह-अत्रापीति। कालवदेत इत्यादिना भाष्यस्यावैयर्थ्यमाह—तर्कानिति। तर्काः काल इवेहापि ज्ञातव्याः। भाष्यस्याक्षरार्थमाह—अथेत्यादिना। ननु परमर्षिपूर्वं कथं व्यवहार इत्यत आह—सर्गादिभवैरिति। ततः पूर्वं व्यवहारः शिष्टान्तरनिबन्धन इति तन्निबन्धनो नास्त्येवेत्यर्थः। प्राचीनप्रवणो प्रागवनते। पारिभाषिक्यो निरर्थाः। अनुगतार्था इति। सूर्यसंयोगलोकाधिनाथावादाय सार्था इत्यर्थः। प्रदक्षिणमित्यनेन गतिरावर्तमानस्येत्यनेन स्थितिः प्राप्यते, तथा च विरोध इत्यत आह—परितो भ्रमत इति। इदं चावर्तमानस्येत्यस्य व्याख्यानम्। एवं च प्रादक्षिण्येन भ्रमत इति सर्वार्थः पर्यवसन्नः। एकस्यासंज्ञायां संयोगलोकपालयोरनुगमो नास्तीति बोधयन्नाह—कथमिति। प्रथममिति। यदपेक्षया प्रथमादित्यसंयोगसंनिहिता या दिक् सा तदपेक्षया प्राची, या तु चरमादित्यसंयोगसंनिहिता सा प्रतीची, पूर्वाभिमुखस्य पुंसो

दक्षिणभागावच्छिन्ना दक्षिणा, वामभागावच्छिन्नोदीची । शरीरे तु दक्षिणत्ववामत्वे अवयवगतजातिविशेषौ । मूलार्थस्तु अवाक् वामभागाश्रितः । प्रतीचं चरमम् । उदक् दक्षिणभागाश्रितः । मुख्यदिशामेव निर्वचनेन कोणनिर्वचनमित्याह—एवमिति । निमित्तमात्रं विशेषणं नैमित्तिकं विशेष्यमिति ।

इति दिङ्निरूपणम् ।

ननु प्रधानस्यात्मनो लक्षणे किमितीयान् विलम्ब इत्यत आह—उद्देशेति । ननु शरीरातिरिक्तस्यात्मनो लक्षणं 127.1
तत्स्वरूपस्य वा ? नाद्यः, तत्र प्रमाणाभावात् । न च गौरोऽहमित्यादिप्रतीतिस्तत्र प्रमाणं, तस्या रूपादिमत्त्वविषयतया पृथिव्यतिरिक्ताविषयत्वात् । न द्वितीयः, तद्भेदस्य पृथिव्याद्यन्तर्गततया पूर्वमेव सिद्धत्वादिति चेन्न । अहं जाने इत्यादिप्रतीत्या शरीराद्यतिरिक्तस्य सिद्धेः, एषा च प्रतीतिर्न शरीरादिविषयेत्यग्रे वाच्यत्वादित्याह—नन्वित्यादिनाऽभिप्राय इत्यन्तेन । सामान्यविशेषो ब्राह्मणत्वादिः । जन्मादीत्यादिपदात्पुत्रत्वादिज्येष्ठत्वादिपरिग्रहः । अपूर्वम् अज्येष्ठम् । अपरम् अकनिष्ठम् । तथापीति । जातिरिह लक्षणं, न च व्यक्तिभेदासिद्धौ तत्सिद्धिरित्यर्थः । ननु विभुत्वात्कथं सौक्ष्म्यमत आह—इन्द्रियेति । परात्मनः पराप्रत्यक्षत्वादित्यर्थः । एवं च परात्मनोऽप्रत्यक्षत्वेऽप्यनुमानग्राह्यत्वान्न स्वरूपासिद्धिरिति भावः । ननु तासां हेतुत्वं न संभवतीत्यत आह—शब्दाद्युपलब्धय इति । पक्षत्वेन ताभिरनुमानमिति भावः । करणैरिति । करणकर्त्रो-

रसमानाधिकरणतया व्याप्त्यभावादित्यर्थः । तथा व्याप्त्य-
128.1 भावेऽपि करणस्य कर्तृप्रयोज्यत्वयोर्व्याप्तिरस्त्येवेत्याह–अने-
नेति । करणानां तु पक्षतयैव तदनुमाने उपयोग इत्याह–
प्रयोग इति । करणत्वमिति । पूर्वानुमानेन करणतयैव
तेषां सिद्धेर्न स्वरूपासिद्धिरिति भावः । करणं करणप्रयोज्यं
करणत्वात् कृतिवद्प्रयोजकत्वमिति शङ्कते—नन्विति ।
अनवस्थालक्षणप्रतिकूलतर्कपराहतेस्तदनुमानं मास्तु, प्रकृते
त्वनुकूलतर्कसत्त्वात्प्रतिकूलतर्काभावाच्च न दोष इत्याह—
कारकेष्विति । प्रकृतानुमानस्यानुकूलं तर्कमाह—अन्य-
थेति । करणं खलु सर्वत्र कर्तृव्यापारगोचर इति लक्षणं
कर्तारं विना न स्यादित्यर्थः । नन्वनेन करणत्वेन
नानुमानं घटते साध्याविशेषादिति लक्षणान्तरमेव वाच्यं,
तथा च न लक्षणव्याघात इत्यत आह–चक्षुरादीनामिति ।
चक्षुरादीनामेव कर्तृत्वे तेषां भिन्नतया योऽहं चाक्षुष-
ज्ञानवान् सोऽहं स्वाचज्ञानवानिति प्रतिसंधानं
कस्य स्यादिति कर्ताऽन्यः स्वीकर्तव्य इत्यर्थः । प्रसिद्धिर्नी-
त्पत्तिस्तन्निर्वाहकत्वेनाकाशादेरेव सिद्धेरित्यत आह—
प्रसिद्ध्येति । ननु ज्ञानं क्वचिदाश्रितं ज्ञानत्वादित्यनुमानं
न संभवतीत्यत आह–ज्ञानमिति । दृष्टान्ताभावात्प्रकृता-
संभवेऽप्ययमिमं संभवत्येवेत्यर्थः । क्वचिदाश्रितं समवेतमि-
त्यर्थः । अन्यथा सत्तागर्भकार्यत्वनिर्वचनविरोधात् । असि-
द्धिमपाकरोति–कार्यत्वमिति । अनुकूलं तर्कमाह–कार्य-
स्येति । यदि न क्वचित्समवेतं तदा तत्समवायिकारणं किं
वाच्यं, तद्भावे च किम्प्रत्यासन्नमसमवायिकारणं, न च भावे

निमित्तकारणमात्रमित्यर्थः । तथापीति । तथाचानुमानेऽ- 128.15
र्थान्तरत्वमिति भावः । किं न शरीरेन्द्रियमनसामित्यपेक्षायामाह—चैतन्यमिति । अग्रे शरीरस्येत्यादिभाष्ये । ननु यथाश्रुते व्यधिकरणासिद्धिः, शरीरादि न चेतनम् अज्ञत्वादित्यत्र साध्याविशेष इत्यत आह—अज्ञत्वेति । कदाचिज्ज्ञानशून्यत्वं चेतनेऽपि संभवतीति सार्वदिकज्ञानाभावप्रमाविशेष्यत्वं हेतुरिति न साध्याविशेष इति भावः । नन्विदमनुमानमन्योन्याश्रयकवलितं ज्ञानाभावसिद्धावेव तत्प्रमासिद्धेरित्यतोऽपरं भाष्यमुत्थापयति—एतदेवेति । व्यधिकरणासिद्धिं वारयति—न शरीरमिति । व्यर्थविशेषणताभिया हेतुद्वयमित्याह—अन्यथेति । अप्रयोजकतां शङ्कते—नन्विति । मृते चासंभवादिति भाष्यस्य सर्वदा शरीरे ज्ञानं नास्तीत्यर्थः प्राप्यते, न चैतावता कोऽप्यनुकूलस्तर्को लब्ध इत्यत आह—यदि हीति । शब्दे व्यभिचारवारणाय पृथिव्यादीति, द्वित्वादौ विशेषेति । अग्निनियमे नैमित्तिकद्रवत्वे व्यभिचारवारणाय विशेषेति । पृथिव्यादीति तु पूर्ववत् । तर्के प्रयोजकतां शङ्कते—अत्रापीति शरीरस्येति । शरीरे सादात्मनि स्तनपानादौ प्रवृत्तिर्न स्यात् संस्काराभावेनेष्टसाधनत्वास्मरणात्, अनादौ त्वात्मन्युपपद्यते पूर्वजन्मानुभवेन संस्कारसंभवेन स्मृतेः संभवात् । अपिच शरीरस्यात्मत्वे बाल्ययौवनयोः स एवाहमिति प्रत्यभिज्ञानरूपमनुसंधानं न स्यात्, परिमाणभेदेन द्रव्यभेदादित्यर्थः। ननु पूर्वं हेतुद्वयोपादानं किमर्थमेकेनैव साध्यसिद्धेरत आह-एतदिति । कुठारादिवदिति । घटादीनां करणत्वेनाप्र-

129.I5 सिद्धेर्नानुवृत्तिरित्यर्थः। अनुभवेति। चक्षुषो रूपानुभवाश्रयत्वे तज्जन्यः संस्कारोऽपि तत्रैव वाच्यः। एवं च स्मृतिरपि तत्रैव वाच्या, अन्यथाऽन्येन दृष्टस्यान्येन स्मरणप्रसङ्गः। तथा च रूपदर्शनानन्तरमन्धस्य रूपस्मरणं न स्यात्, अनुभवितुरभावादित्यर्थः। अनुभवस्य स्मृतिकारणत्वेऽन्वयव्यतिरेकौ बीजं, व्यापारवत्तायां चिरध्वस्तत्वम्, अन्यथाऽनुत्पन्नस्यापि कार्यकारित्वं स्यात् अव्यवहितपूर्वकालसत्त्वाविशेषात्। व्यापारकल्पनायां च व्यापारेणाव्यवहितसत्तानिर्वाह इति भावः। स्वरूपतो व्यापारतो वाऽव्यवहितपूर्वसत एव कार्यकारित्वादिति हृदयम्। ननु घटादिकुठारयोर्दृष्टान्तत्वमनुपपन्नं तत्र चैतन्यासिद्धेरत आह–घटादीनामिति। एतत्संगततयैव विषयासांनिध्य इत्यादि भाष्यं नासंगतमित्याह–अत्रेति। नेन्द्रियाणामित्यनेन स्वसंगतमेवेति भावः। विषयेत्यत्र कुठारादीत्यपि द्रष्टव्यम्। नन्वन्यत्र स्थितानामेव स्मरणं भविष्यतीत्यत आह—असंनिधिरिति। न हि व्यवहित इव नष्टेऽपि स्मरणमुपपद्यत इति दर्शयति–न हीति। अनुभवितुः स्मरणसमवायिकारणत्वादिति भावः। ननु भाष्येऽनुस्मृतिपदं तिष्ठति किरणावल्यां तु नहीत्यादौ स्मरणपदमतो विरोध इत्यत आह–अनुभवादिति। अस्त्विति। नित्यत्वेन स्मरणाय पूर्वजन्मसंस्कारोपपत्तिः प्रत्यभिज्ञोपपत्तिश्च सर्वविषयत्वे, य एवाहं रूपदर्शी स एव स्पर्शज्ञानवानिति प्रत्यभिज्ञोपपत्तिः। अभूतत्वे च पूर्वाचैतन्यसाधकहेतोरभाव इत्यर्थः। अयामीति। ज्ञानाश्रयो मनः कर्तृ करणमुभयात्मकं वा? नाद्यः। तेनाधिष्ठितेन चक्षुरादिना युगपज्ज्ञानोत्पत्तिप्रसङ्गात्। करणत्वे

तु न भवति एकस्य करणस्यैकदैकज्ञानजनकत्वनियमात् कर्त-
रि तथानियमाभावात् । न चेष्टापत्तिः व्यासङ्गदर्शनात् । मनो-
भिन्नस्य आत्मनः स्वीकारे मनसः करणतया तत्स्वभाव-
बलेन नानेकज्ञानोत्पत्तिः । न चैकं मनः कर्तृ परं च करणम्,
एवं करणाभिन्नस्य कर्तृत्वेऽर्थद्वयसिद्धौ वादिनोः संप्रतिपत्तौ
संज्ञायां परं विवादः स्यात् भवता कर्तुर्मनस्त्वेन व्यवहारात्
सिद्धान्तिनात्मसंज्ञयाभिधानात् । न द्वितीयः । एवं हि
कर्तान्यः स्वीकर्तव्यः, तथा च तस्यैव ज्ञानाश्रयतया सिद्धस्यो-
पकरणतया सिद्धेऽस्मिन् धर्मिग्राहकप्रमाणबाधात् । न
तृतीयः । विरोधादित्यर्थः । अयमाशयः—मनसः कर्तृत्वे
युगपज्ज्ञानानि कुतो न भवन्ति अधिष्ठितानां करणानामनेक-
त्वात् करणस्वभावस्य वक्तुमशक्यत्वात् । नापि विषयाणां नि-
ष्प्रयुक्तो ज्ञानविलम्बः युगपद्विषयसंनिधानसंभवात् ।
स्मृतयश्चाप्यनूह्यमनेकाः स्युः तत्र करणान्तरस्याभावेन तत्स्व-
भावस्य वक्तुमशक्यत्वात् । अनुभवरूपकरणानां नानात्वात् ।
मनोभिन्नस्य तु कर्तृत्वे करणमनःस्वभावादेव नानेकज्ञाना-
नीति । ननु कथं परिशेषो दिगादीनामप्रतिषेधादत आह—
दिगिति । प्रसक्तस्य प्रतिषेधः परिशेषेऽन्तर्भवति न त्वन्य- 131.2
स्यापीत्यर्थः । आकाशादिगुणत्वे ज्ञानस्य मनोग्राह्यत्वं न
स्यादिति हृदयम् । एतेन शब्दादिभिः सिद्धिः, परं तेषां न
ज्ञानाश्रयत्वप्रतिक्षेप इति निरस्तम् । पारिशेष्यं पृथक्
प्रमाणमिति भ्रमं निवारयति—प्रसक्तेति । एतावता
पृथिव्यादिनार्थान्तरं न भवतीत्युक्तम् । नन्वात्मकार्यत्वेन
कथं सिद्धिरात्मन एवाभावादत आह-पृथिव्यादीति ।
ननु ज्ञानमात्माश्रितमित्यनुमानं न संभवत्यात्मनोऽप्रसिद्धौ

131.5 साध्याप्रसिद्धेरत आह—तदयमिति । ननु पृथिव्यादिव्यतिरिक्तद्रव्यासिद्धाविदमपि साध्यं कथं साध्यमिति चेन्न । ज्ञानं द्रव्याश्रितं गुणत्वादित्यनुमानेन ज्ञानाश्रयद्रव्यसिद्धौ, तद्द्रव्यं पृथिव्यादिव्यतिरिक्तं तद्वृत्तिधर्मवत्त्वादिति पृथिव्यादिव्यतिरिक्तद्रव्यसिद्धौ, ज्ञानविशेष्यकपृथिव्यादिव्यतिरिक्तद्रव्याश्रितत्वप्रकारकबोधार्थं प्रकृतव्यतिरेकिप्रवृत्तेः । साध्यप्रसिद्धेर्द्रव्यत्वे सत्त्वात् । न च ततः सपक्षाद्धेतुव्यावृत्त्यासाधारण्यम् अनुकूलतर्कबलेन प्रकृतव्याप्तिग्रहे तस्यादोषत्वादिति दिक् । गन्धादौ व्यभिचारं वारयितुं हेतौ सत्यन्तं, रूपत्वादौ कार्यत्वादिति, साध्ये सिद्धसाधनतावारणाय व्यतिरिक्तान्तम् । आत्मत्वेति । स्वात्मनः सिद्धत्वादिति भावः । परेति । एवं च तत्र साधनान्वेषणप्रयासः स्यादित्यर्थः । प्रयत्नवानित्यस्य वैयर्थ्यमाशङ्क्याह—विवरणमिति । ननु विग्रहस्य प्रयत्नवान् इदमनन्वितमत आह-शेष इति । एवं च विग्रहस्य प्रयत्नवान् संयोग्यनुमीयत इत्यन्वयः । हेतुद्वयकरणे वैयर्थ्यं बीजमित्याह- अनयोरिति । अत्र प्रवृत्तिपदेन वस्त्वन्तराभिमुखक्रिया निवृत्तिपदेन च तत्पराङ्मुखक्रिया गृह्यते, न तु यत्नविशेषः तस्य शरीरेऽसमवायात्, नापि तत्साध्यक्रिया यत्नाग्रहणे तत्साध्यक्रियात्वस्य हेतुतावच्छेदकस्याग्रहणात्, एवं च यत्नासाध्यघटादिक्रियया व्यभिचार इत्याह—क्रियेति । ननु हितादिपरिहारादिपूर्ववर्तित्वं हेतुरस्तु किं जातीयत्वपर्यन्तेनेत्यत आह—योग्येति । ननु यत्र नान्तरायः सैव हेतुरस्त्विति चेन्न । सामान्यस्य हेतुत्वे संभवति विशेषस्यानङ्गीकारात् । भाष्ये शरीरेत्यादिस्वरूपकथनं न हेतुप्रविष्टमित्याह—एवमिति । प्रायेणेत्यनेन चेष्टा क्रियारूपा

शरीरादावेव, हिंसादिपरिहारार्थं तु रथेऽपीति दर्शितम् ।
ननु लतादावपि चेष्टास्तीत्यत आह—यथा चेति । ननु 132.2
चेष्टात्वस्य हेतुतावच्छेदकत्वे कथं रथो दृष्टान्त इत्यत
आह—अत्रेति । तद्योग्यत्वेनैव हेतुतेत्यर्थः । विपक्ष इति । न
हि कारणं विना कार्यं संभवतीत्यर्थः । आदिपदग्राह्य-
माह—अनेनेति । केनेति । आत्मनोऽवृत्तितयाऽव्यापक-
त्वासंभवादित्यर्थः । उत्तरमिति । तदधिष्ठितत्वं व्यापक-
मित्यर्थः । ननु वायुना न तदनुमानं व्यभिचारादत आह—
लिङ्गत्वमिति । वायुविशेषेणानुमानमित्यर्थः । व्याप्तीति ।
हेतुग्राहकमित्यर्थः । अनेन व्याप्तेरप्रत्ययात् । ननु संमूर्छ-
नाविकृतक्रियपवनवति गृहादौ व्यभिचार इत्यत आह—
प्रयोग इति । अथवेत्यत्रास्वरसः । एवं तस्य पक्षत्वप्राप्तौ
लिङ्गानीति सूत्रविरोधात् । नन्विति । स्पन्दमात्रेणाप्रयो-
जकतयानुमातुं न शक्यत इत्यर्थः । यादृगिति । कारणं
विना कार्यानुत्पत्तेरत्र नाप्रयोजकत्वमित्यर्थः । तस्यापीति ।
परेच्छाया अप्रत्यक्षत्वादित्यर्थः । प्रपञ्चार्थ इति । ननु निमे-
षादिमात्रस्य हेतुत्वेऽप्रयोजकता, हितप्राप्तियोग्यनिमेषादे-
स्तत्त्वे तत्र कर्मप्रवेशे तादृशकर्मण एव हेतुत्वे शेषवैयर्थ्यात्,
तस्यैव हेतुत्वे पौनरुक्त्यमिति चेन्न । वातविकाराजनितनि-
मेषादेस्तत्त्वात् । विघटनमीषद्विभागः सर्वात्मना विश्लेषः ।
ननु जीवनस्य लिङ्गत्वं प्रक्रम्य वृद्ध्यादेस्तदभिधानं विरुद्ध-
मत आह—सूत्र इति । प्रक्रम एव नास्तीत्यर्थः । मुख्यत
इति । तेन च नानुमानमसिद्धेरित्यर्थः । तत्रापीति । पूर्व-
मेतत् सिद्धमित्यर्थः । गृहकोणेष्विति । गृहकोणव्यवस्थितस्य
चेलकस्य प्रेरक इत्यर्थः करणे चक्षुरादिस्थानीयं न प्राप्यतेऽ-

त्मिमन्नर्थं तु साध्यते । यथैतत्पेलकसंबन्धनिमित्तेऽवपेल-
ककर्मणि प्रयत्नवानस्ति तथा चक्षुःसंबन्धनिमित्ते मनःकर्मण्य-
134.13 प्यस्तीत्यर्थप्राप्तिरित्याशयः । **प्रयत्नेति** । प्रतीन्द्रियं मनो-
भेदे ज्ञानयौगपद्यं स्यादेव, वैभवेऽप्येवम्, अगतित्वे तु यत्र मनः संबद्धं तत्रैव ज्ञानं स्यात् न तु क्रमेणापीन्द्रियान्तरजन्यं ज्ञानमित्याशयः। एवं च यत्नेऽपि योज्यम्। **मन इति**। पतनादिमति व्यभिचारवारणाय सत्यन्तम् । सत्यन्तासिद्धिं शङ्कते—**अदृष्टेति । क्वचिदिति** । कर्मविशेषवन्मनः प्रयत्नतश्च नादृष्टेन कर्मेति न सत्यन्तासिद्धिरित्याशयः । **यद्यपीति** । अदृष्टजन्यसाधारणकर्मणो हेतुत्वे मन आत्माधिष्ठितमित्यनुमानेनापि यद्यप्यात्मा सिध्यत्येव तथापि कर्मविशेषेण प्रयत्नवत्त्वेनात्मसिद्धिरित्यर्थः । बाधं शङ्कते—**यद्यपीति । तथापीति** । एवं च मनोवहा नाडी प्रयत्नवदधिष्ठितेत्यनुमानेन बाध इत्यर्थः । **अदूरेति** । प्रयत्नवदात्मसंयोगान्नाड्यां क्रिया स्पर्शवद्वेगवन्नाडीसंबन्धान्मनसीत्यर्थः । **अदृष्टस्येति** । अदृष्टविशेषसहकृतत्वेन त्वचैव क्रियापूर्वसमये तासां नाडीनां प्रत्यक्षता, अन्यथा तद्विषयकः प्रयत्नो न स्यात् चक्षुरादिना तासामनुपलम्भादित्यर्थः । एवं च यथाऽनाद्यभ्यासवासनादिसहकृतत्वगिन्द्रिय [ जन्य ] प्रत्यक्षेण मलादिवहनाडीषु प्रयत्नस्तथा प्रकृतेऽपीत्याह—**अनादीति** । निर्विकल्पकस्य न संस्कारोद्बोधकतेत्यत आह—**ग्रहणमिति** । एकसंबन्धिज्ञानानन्तरमपरसंबन्धिस्मरणं तत्संस्कारवतो भवति । न च रूपदर्शिनो रसस्मरणं चक्षुरादिरूपत्व उपपद्यत इति भावः । ननु नयनादीनामचेतनत्वे सिद्धेऽपि नात्मसिद्धिरत आह—**यद्वेति** ।

स एवाहं रूपदर्शी स एव स्पार्शनज्ञानवानिति प्रत्यभिज्ञा नियतविषयत्वेन स्यात् इत्यर्थमाह-अन्यथेति । अत्र प्रतिसं 136.1-2
धानं न विकारकारणं किन्तु स्मरणमेवेति नियतविषयत्वे विकारानुपपत्तिप्रतिसंधानानुपपत्ती पृथग्दूषणे इति भावः । नन्विति । दृष्टान्तानुरोधेन शरीरे विग्रहवतोऽधिष्ठातृत्वे द्वितीयादिशरीरेऽपि तथा स्यादिति शरीरानवस्थाभयाद्यथा न तथा स्वीकारस्तथा शरीरभिन्नप्रयत्नवतः स्वीकारे गौरवात्तदपि माङ्गीकुर्वित्यर्थः । गौरवे प्रामाणिकतामाह-नेति । न हि भेदे य एवाहं रूपदर्शी स एवाहं स्पर्शबोधवानित्युपपद्यते, अपि च प्रत्यभिज्ञानस्य ज्ञानतया कथमचेतने शरीरे संभव इत्यर्थः । अनाश्रितत्व इति । अत्राप्रयोजकत्वे द्रव्याश्रितत्वाभावः स्यात्, स च द्वेधा सामान्यतोऽनाश्रितत्वे द्रव्या द्रव्याश्रितत्वे च, उभयथापि गुणत्वव्याघातस्तस्य द्रव्य एव वृत्तिनियमादित्यर्थः । हेतावसिद्धिं वारयति-सिद्धमिति । अत्र हेतुद्वये रूपत्वशब्दत्वयोर्व्यभिचारवारणाय सत्यन्तं, प्रथमहेतौ घटे व्यभिचारवारणाय द्वितीयहेतौ संयोगात्यन्ताभावे तद्वारणाय विशेष्यभागः । विचारोऽन्यत्र । अत्राप्रयोजकत्वे शङ्कित आह-कार्यस्येति । अगुणत्वे हि द्रव्यत्वादि वाच्यं तत्र द्रव्यत्वे सति कार्यत्वे सावयवत्वमूर्तत्वे स्यातामित्यर्थः । कर्मत्व इति । तथाभूतत्वस्यैव कर्मलक्षणत्वादित्यर्थः । अनपेक्षकारणत्वमसमवायिकारणत्वं केवलस्याजनकत्वात् । कार्यस्य सामान्यत्वं न संभवत्येव नित्यत्वगर्भलक्षणव्याघातात् । विशेषत्वं न संभवति प्रत्यक्षत्वानुपपत्तेः । नापि समवायत्वं संबन्धत्वेनानवभासमानत्वादित्यर्थः । अर्थान्तरं शङ्कते—नन्विति । कस्मादित्यस्य वैयर्थ्यमाशङ्क्याह—

136.18 **कस्मादितीति**। प्रतिज्ञानन्तरमाकाङ्क्षयैव हेत्वभिधानादित्यर्थः। एकवाक्यतायां वाक्यधर्मत्वादाह—**सामानाधिकरण्येनेति**। अहन्त्वसामानाधिकरण्येनानुभवोऽहं गौर इति रूपेऽप्यस्ति, तथाचाविरोधादित्युक्तम्। एवं च तादृशप्रमाविषयत्वं हेतुरिति भावः। ननु शरीरादिकमादाय सामानाधिकरण्यानुभवः कथं विरुद्ध इत्यत आह—**योऽहमिति**। न हि मैत्रसुखमादाय दुःखिनश्चैत्रस्य योऽहं दुःखी सोऽहं सुखीति प्रतिसंधानं भवतीत्यर्थः। एवं च प्रतिसंधानायैकाश्रयत्वं तेषां वाच्यमित्याशयः। भिन्नाश्रया अपि प्रतिसंधीयन्त इति शङ्कते—**नन्विति**। **नेति**। शरीरगतानां तेषामात्मनि प्रतिसंधानं भ्रमरूपं तत्। प्रमारूपं तदुभयाश्रय एवोपपद्यत इति भावः। **स्मर्तुरिति**। अन्यस्मिन्ननुभवितरि नान्यस्मिन् स्मरणमित्यर्थः। भ्रमानुभवेन भ्रमस्मरणदर्शनेन यथाश्रुतेऽनुपपत्तेरित्यवधेयम्। अत एवाह—**अन्येनेति**। **प्रतिसंधातुरिति**। न हि पूर्वसुखाननुभवितरि योऽहं पूर्वं सुखी सोऽहमिदानीं दुःखीति संभवति। न च पूर्वापरकालयोरभेदं विनेदमुपपद्यते, न चाभेदः शरीर उपपद्यते इति भावः। **स्यादेतदिति**। प्रतिसंधानस्मृत्योः पूर्वानुभवसमानाश्रयतया स्थिरत्वेन तदाश्रयः शरीरादिभिन्नोऽस्तु, सुखादयस्तु गौरत्वादिवत्प्रतिसंधात्रा स्वनिष्ठत्वेन गृह्यन्त इत्यर्थः। स्मृतिबुद्ध्योरित्यत्र गोबलीवर्दन्यायः। **ज्ञानेनेति**। भिन्नाश्रयाणां ज्ञानादीनां कार्यकारणभावेऽतिप्रसङ्ग इति ज्ञानसमानाधिकरणा इच्छादय इति न शरीराश्रया इत्यर्थः। **प्रयोग इति**। अत्र तदिति संपातायातं तद्रहितस्यैव सामर्थ्यात्। ननु यावद्द्रव्यभावित्वमेवास्ती-

त्यत आह–सत्येवेति । अनुभवोऽत्र मानमित्यर्थः । अन- 138.10
योरिति । आत्मनिष्ठया बुद्ध्या स्वासमानाधिकरणशरीर-सुखजनने सामानाधिकरण्यस्य नियामकस्याभावाच्चैत्रबुद्ध्या मैत्रेऽपि सुखप्रसङ्गः । न च यस्यात्मनो बुद्धिर्यच्छरीरविषयिणी तत्र सुखं सूत इति वाच्यम् । चैत्रबुद्धेरपि मैत्रविषयकत्वादित्यर्थः । सुखादयो नेन्द्रियगुणा अयावद्द्रव्यभावित्वादिति शब्दे व्यभिचारि, आकाशस्य नित्यत्वात् । अव्याप्यवृत्तित्वादित्यपि तत्रैव व्यभिचारि, आकाशस्य विभुत्वात् शब्दस्याव्यापकत्वाच्चादिकारणानुरोधेन प्राच्यां शब्दो न प्रतीच्यामित्यादिप्रतीतिबलेन चाव्यापकत्वादित्याह—स्यादेतदिति । भाष्योक्तो हेतुश्चक्षूरूपादौ व्यभिचारीत्यत आह—मानसेति । अनुकूलं तर्कमाह—ज्ञानेति । यदि ज्ञानव्यधिकरणस्यापि मनसा ग्रहणं चैत्रे तदा मैत्रगुणस्यापि ग्रहणप्रसङ्गः । न च मनसा न गृह्यत एवेति वाच्यम् । चक्षुर्ग्राह्यत्वेऽन्धेनाग्रहणप्रसङ्गात् । एवमिन्द्रियान्तरग्राह्यत्वेऽपि तद्विकलने ग्रहणमनुसर्तव्यम् । अपि च शरीरगुणस्य मनोग्राह्यत्वे रूपादयोऽपि गृह्येरन् । न यथा चक्षुषा रूपमेव गृह्यते रसनेन रस एव तथा मनसा सुखादय एव ग्राह्या इति वाच्यम् । मनसः सर्वविषयत्वस्य सर्वसंमतत्वात् । रूपादिग्रहे चक्षुरादिपारतन्त्र्यस्य परमभ्युपगमात् । न च स्वातन्त्र्यं मनसः सुखादावेवेति वाच्यम् । मनसो बहिःस्वातन्त्र्ये बहिरिन्द्रियत्वापत्त्या मनस्त्वव्याघातादित्यर्थः । ननु सुखादीनां विषयादिगुणत्वं किमिति न प्रतिषिद्धमत आह—अहमिति । अप्रसक्तप्रतिषेधे ग्रन्थो विस्तीर्णता

दित्यर्थः । नन्वेवमात्मनः सिद्धौ वृथाग्रिमं भाष्यमत
ाह—संप्रतीति । रथेऽधिष्ठाता शरीरी दृष्टः प्रकृते
धिष्ठेयातिरिक्तशरीरवानिति निरुक्तो येः विशेषाभासः
पि माऽस्त्वित्येतदर्थमग्रिमं भाष्यमित्यर्थः ।

नन्वात्मज्ञाने सत्यहमिति शब्दप्रयोगस्तेन चात्मज्ञा-
ात्यन्योन्याश्रय इत्यत आह—प्रत्ययमिति । तथाशब्दा-
141. ाय परिहरति—यथेति । अस्य प्रत्ययस्य प्रत्यक्षत्वे
ाmaह—न हीति । उपमानस्य तु प्रसक्तिरेव नास्तीति
ाः । पूर्वानुरोधेनात्रापि शब्दपदं प्रत्ययपरतया नयति—
ययेति । वैयधिकरण्यं दर्शयति—यदीति । ननु यथा
पाश्रितपृथिव्यां घट इति व्यवहारो न पृथिवीमात्रे तथा
ारूपायामहमिति नान्यत्रेति शङ्कते-स्यादेतदिति । य एवा-
ालये स एवाहं वार्द्धक इति प्रतिसंधानादैक्य प्रत्ययविषयः,
। तच्छरीरस्य संभवति तस्य परिमाणभेदेन भेदादित्याह—
ङ्कारस्येति । ननु तदेवेदं शरीरमिति प्रत्यभिज्ञाना-
मेव शरीरं सिध्यतीति भेदे प्रमाणाभावाच्छरीरस्य प्रति-
ात्त्वसंभवेनाहमिति प्रत्ययस्य शरीरविषयत्वेन नात्मा-
रिक्तः सिध्यति । न च प्रत्यभिज्ञानमप्रमाणं तद्बीजस्य विरु-
सर्गस्य विरहादिति चेन्न । परिमाणभेदस्यैव विरुद्धधर्म-
र्गत्वात् । ननु यथा द्वित्वादिभेदेऽपि न द्रव्यभेदस्तथा
रिमाणभेदेऽपीति न विरुद्धधर्मसंसर्ग इति चेन्न । द्वित्वा-
ात्पादस्यापेक्षाबुद्धिप्रभृतेस्तन्नाशकस्य तन्नाशादेर्द्रव्यसत्त्वा-
रोधितया तद्भेदेऽपि द्रव्यभेदस्याप्रामाणिकत्वात् । परि-
णनाशस्तु द्रव्यनाशादेवेति परिमाणभेदे द्रव्यभेदस्य प्रामा-

शिकत्वात् । न हि पूर्वपरिमाणसत्त्वे परिमाणान्तरमुत्पद्यते परिमाणद्वयाननुभवात् अपि तु प्रथमनाशे, न च द्रव्यनाशातिरिक्तं तन्नाशकमस्तीति प्रथमनाशे द्रव्यान्तरोत्पत्तेः प्रामाणिकत्वात् । ननु परमाणूनां नित्यत्वात्प्रत्यभिज्ञानविषयत्वेनाहमितिप्रत्ययविषयत्वं स्यादित्याह—तन्मूला इति ।140.16
अतीन्द्रियाणां कथमहमिति प्रत्यक्षविषयत्वं स्यादित्याह—तेषामिति । अपि चाहमिति प्रत्ययस्य शरीरविषयत्वे चाक्षुषत्वं मानसत्वं [ वा ] वाच्यम् । नाद्यः । अन्धस्यापि जायमानत्वात् । नान्त्यः । शरीरस्य मानसत्वे च तद्गुणस्य रूपस्यापि तत्त्वेऽन्धेनापि गौरत्वादिग्रहप्रसङ्गः, निर्गुणस्य द्रव्यस्यानुपलब्धेरित्याह—अपि चेति । उपसंहरति-तस्मादिति । अहमिति प्रत्ययः पृथिवीमात्रविषयको न भवति घटादावापत्तेः,शरीरविषयको न भवति भेदेन तस्याप्रतिसंधातृत्वादिति भिन्नं द्रव्यमात्मावलम्बत इति परमार्थ इत्यर्थः । एवं च प्रत्यक्षेण स्वात्मनः सिद्धौ तत्कार्यचेष्टावत्त्वशरीरदृष्टान्तेन शरीरान्तरे चेष्टावत्त्वेन हेतुनात्मानुमानं विशेषविरोधाभासेनापि शून्यं भवतीत्याह—तथा चेति ।

एतत् बुद्ध्याद्यतिरिक्तात्मसाधनम् । वैनाशिकैः क्षणिकतावादिभिः । बुद्ध्युपादानमात्मेति तावदशुद्धम् अस्माकं पूर्वपूर्वबुद्धेरेवाग्रिमाग्रिमबुद्ध्युपादानत्वादिति बुद्ध्युपादानत्वेन क्वातिरिक्तात्मसिद्धिरित्युपहासबीजमाह—बुद्धेरिति । ननु सुखादिगुणाश्रयो द्रव्यमात्मेति वैशेषिकसिद्धान्तानुसारेण वदतामस्माकं नोपहासविषयतासंभव इत्यत आह—अथेति । वैशेषिकशास्त्रप्रामाण्यानुसारेणाभिधानमिति नोप-

ह्रासविषयतेति भवतोऽभिसंधिः, न चेदमुपपद्यते तच्छास्त्रस्याप्रमाणत्वात् । न च तदसिद्धं क्षणिकत्वसिद्धौ स्थैर्यांशेऽप्रामाण्ये तद्दृष्टान्तेनान्यत्राप्यप्रामाण्यसाधनात्तत्संशयेऽपि प्रामाण्यासिद्धेरित्याशयः । प्रक्रियामात्रं बालव्युत्पत्तये यत्किञ्चित्प्रमेयाभिधानमात्रम् । न केवलं सुखाश्रयो द्रव्यमात्मेत्यंशे प्रक्रियामात्रत्वम् अपि तु सर्वांश एवेत्याह—

141.9 क्षणिकत्वेति । बाललालनार्थत्वं बालव्युत्पादनमात्रप्रयोजनकत्वम् । काव्यत्वोपवर्णनेनाप्रामाण्यमुक्तम् । एकत्राप्रामाण्ये सिद्धे तद्दृष्टान्तेन तद्ग्रन्थत्वेन हेतुनांशान्तरेऽप्यप्रामाण्यमनुमेयमिति भावः । क्षणिकत्वे विप्रतिपत्तिः, अयं घटः स्वाव्यवहितोत्तरक्षणवर्तिध्वंसप्रतियोगी न वा । विधिप्रसिद्धिः पूर्वकालध्वस्ते तत्कालध्वस्ते वा, स्वपदेन प्रकृतघटस्यैव ग्रहणात् । निषेधः तद्दशायामुत्पन्ने प्रकृतघटे तत्सिद्धौ क्षणिकतासिद्धिः । तत्र बौद्धः स्वमतावष्टम्भेन न्यायमाह—यत्सदिति । तेषामुदाहरणोपनययोरेव न्यायत्वादित्यर्थः । न्यायनये त्वनुमानच्छायेत्थम्—शब्दादयः क्षणिकाः सत्त्वात्, यदेवं तदेवं यथा घनः, तथा चैते, तस्मात्तथेति । न च दृष्टान्तासिद्धिः, अस्य दोषस्य सिद्धान्ते वाच्यत्वात् । विवादाध्यासित इत्यनेन जल्पकथात्वेनात्र विप्रतिपत्तिरवश्यमपेक्षिता, सा चोक्तन्याये नास्तीति दर्शितम् । ननु सत्त्वं जातिरिह हेतुत्वेन विवक्षितं, तच्च नैयायिकानां मते विधिरूपं, बौद्धानां तु व्यावृत्तिरूपमित्युभयसाधारणैकहेतोरभावात्कथमनुमानप्रवृत्तिरत आह—सत्त्वमिति । जातिरूपं सत्त्वं हेतुत्वेन न विवक्षितमेव येन तत्र वैमत्येनान्यतरासिद्धिः स्यात्, विवक्षितं तूभयसिद्धमेवेत्यर्थः । तत्र प्रत्यक्षसिद्धे नोभयोरन्यतरस्य

विवाद इत्याह—तच्चेति । अप्रयोजकताशङ्कायामाह— 141.13
व्याप्तमिति । स्थिरमादाय व्यापकस्य निवृत्तावव्याप्यस्य हेतोर-
पि निवृत्तौ क्षणिकत्वासत्त्वे सत्त्वमेव न स्यादिति हेतुरस्तु सा-
ध्यं मास्त्विति शङ्कितुमशक्यमित्यर्थः । व्याप्तिमुत्पादयति—न
हीति । एकस्यानेककार्यजनकत्वं क्रमेणाक्रमेण वा संभवति । तत्र
स्थिरे क्रमो न संभवति सामर्थ्ये युगपत्कार्यजननप्रसङ्गात्, असा-
मर्थ्ये क्रमेणाप्यसंभवात् । यदा यत्र समर्थस्तदा तज्जनयतीति
तु न संभवति एकस्यैव सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्म-
संसर्गादेकत्वव्याहत्यापत्तेः । एवं च स्थिरपक्षे क्रमो न संभवति ।
नाप्यक्रमः, कार्ये क्रमस्यैवोपलम्भात् । क्षणिकतापक्षे तु
क्रमिककार्येषु कारणभेदोऽनेन क्रमपक्षव्यावृत्त्याऽक्रमपक्षनि-
ष्ठायां यदनेककार्यशक्तं तद्युगपदेव तावत्कार्यं करोतीति
सिध्यति, इति क्षणिकतापक्ष एव क्षोदक्षमः । ननु क्रमाक्रमयोः
स्थिरे सिद्धा च तृतीयं प्रकारमाश्रित्यार्थक्रियोपपद्यत इति
चेन्न । तृतीयप्रकारस्यासंभवात् । एतयोरुभयोरभावे तृतीयः
प्रकारः । न चैष संभाव्यते, तत्र क्रमाभावे वाच्येऽक्रमस्यो-
पगमेऽक्रमाभावस्य वक्तुमशक्यत्वात् । एवमक्रमाभावे वाच्ये
क्रमाभावेऽपि द्रष्टव्यम् । न चैकाभावे वाच्येऽपि नापरोपग-
मः, घटाभावे पटस्येवेति वाच्यम् । तत्र परस्परविरहरूप-
त्वाभावेऽप्यपरापर्यवसानात् । अत्र तु परस्परविरहरूपत्वेनै-
काभावेऽपरपर्यवसानात् । अन्यथैकनिषेधस्यैवाभावापत्तेः ।
न चोभयभिन्नस्तृतीयः प्रकारो मास्तु, उभयात्मकस्तु स्यादिति
वाच्यम् । विरुद्धयोरेकत्वाभावादित्याशयः । व्याघातस्य तृती-
यप्रकारासंभवस्य । तदेव दर्शयति—न क्रम इति । यदि चैकनिषे-
धेऽपि नापराभ्युपगमस्तदा तस्य निषेध एव न स्यादित्याह—

141.17 अनभ्युपगमे चेति । क्वचिदभ्युपगमे चेति पाठः । तदा यद्येकनिषेधेऽपराभ्युपगमस्तदा द्वयोर्निषेधो व्याहन्यत इति तृतीयः प्रकारो न संभवतीत्यर्थः । भवतु तयोर्व्यापकत्वं ततः किमत आह—तौ चेति । व्यापकनिवृत्त्या व्याप्यनिवृत्तेः सर्वसिद्धत्वादित्यर्थः । तत्र स्थिरे क्रमाभावमुपपादयति—वर्तमानेति । यथा वर्तमानं जनयति तथातीतानागते अपि जनयेत् सामर्थ्यस्याविशेषात् अन्यस्य जननाप्रयोजकत्वादित्यर्थः । एवं च सामर्थ्ये क्रमो न स्यादिति भावः । तदा तयोरसामर्थ्येऽन्यदा च सामर्थ्ये विरुद्धधर्माध्यासः, सर्वदाऽसामर्थ्ये तदापि जननानुपपत्तिरित्याह—असमर्थत्व इति। ननु सामर्थ्यमात्रं न कारणप्रयोजकं किं सहकारिसमवधानमपि, तथा च क्रमिकसहकारिसंपत्त्या क्रमिककार्योत्पत्तिरिति शङ्कते—समर्थोऽपीति । कारणं सहकारिणः स्वस्वरूपलाभार्थं नापेक्षते, स्वरूपं कार्यं चेत्तदा स्वकारणादेवोत्पत्तेः, नित्यं चेत्तदानुत्पन्नस्यैव सत्त्वादित्याह-न प्रथम इति । तस्य उपकारस्य । यदि समर्थस्तदोपकाररहितोऽपि कुर्यात् असामर्थ्ये तूपकृतोऽपि न कुर्यादित्यर्थः । अत एवेति । सामर्थ्यासामर्थ्ययोः सहकारिणां वैयर्थ्यादित्यर्थः । ननु कार्यमेव सहकारिणोऽपेक्षते एकस्मात्तदनुपपत्तेरिति शङ्कते—अनेकेति । एकं सिद्धमपरमपेक्षते न स्वसिद्धं, कार्यं त्वसिद्धं कथं सहकारिणोऽपेक्षत इत्याह—तस्येति । अपेक्षाया धर्मत्वेन धर्मिणं विनानुपपत्तेरिति भावः । अस्वातन्त्र्यात् असिद्धत्वात् ।

ननु सिद्धमेव कार्यं न त्वसिद्धमत आह—स्वातन्त्र्य 142.7
इति । पूर्वमेव सिद्धं तत्तत्कार्यं न स्यादित्यर्थः । यद्धि यतो भवति तत्तत्कार्यम् । सिद्धं च समवहितादपि सकलकारणात् सिद्धत्वादेव न स्यादित्याह—तद्धीति । प्रकारान्तरेण सहकारिणामपेक्षां दूषयति—अथवेति । कारित्वं स्वभावः, सहकारिसाहित्यं धर्म इति यदि प्रथमपक्षार्थस्तदा सहकार्यसाहित्येऽपि कारित्वस्वभावसत्त्वात्कुर्यादेवेत्याह—न प्रथम इति । तादवस्थ्यात् सहकारिव्यावृत्तावपीत्यर्थः । तदेवाह—न हीति । ननु सहकारिसाहित्ये सति कारित्वं स्वभावः, न चेदृशस्वभावस्य सहकारिविरहे कर्तृत्वमापादयितुं शक्यते स्वभावभङ्गापत्तेः, न तु कारित्वमात्रं स्वभाव इति शङ्कते—नन्विति । एवं हि सहकारिसाहित्यमपि स्वभावान्तर्गतं, तथाच स्वभावभङ्गभिया सहकारिणो न जह्यादित्याह—स तर्हीति । अकारित्वं स्वभावः सहकारिराहित्यं धर्म इति यदि द्वितीयपक्षार्थस्तदा सहकारिसाहित्येऽपि न कुर्यात् अकारित्वस्वभावभङ्गापत्तेरित्याह-अत एवेति । अथ सहकारिराहित्ये सत्यकारित्वं स्वभावस्तदा सहकारिसाहित्यं कारित्वं वा कदापि न स्यादित्याह—अथेति । अथेति । एवं चासत्सु सहकारिषु न कारित्वं, सत्सु च कारित्वं, तथा च विरुद्धधर्माध्यस्तत्वमित्यर्थः । नन्वेककाले विरुद्धधर्माध्यासो भेदकः, प्रकृते च कालभेद इत्यत आह—न चेति । अनयोः स्वभावयोर्धर्म्यभिन्नत्वे

धर्मिणोऽपि भेदापत्तिः, न ह्युभयाभिन्नमेकं संभवति, भेदे तु धर्मिस्वभावत्वं तयोर्न स्यात्, न ह्यन्योऽन्यस्य स्वभावः
143 1 घटस्य पटस्वभावत्वापत्तेरित्याह—धार्मिण इति । उपकारेऽपीति । तस्यापि कार्यत्वात्, सहकारिणां च सहकारित्वादित्यर्थः । उपकारेणापीति । तस्यापि सहकारित्वादित्यर्थः। सहकारिभिर्जनित उपकारः कारणाभिन्नस्तद्भिन्नो वा ? आद्ये—सहकारिभिः कारणमेव जनितमिति प्राङ्न स्थितमिति क्षणिकतायामेव पर्यवसानम् । द्वितीये तस्मिञ्जातेऽपि कारणस्वरूपस्याजनकदशावर्तिनस्तादवस्थादजनकत्वमेव स्यात्, पूर्वं तदुपकारोपकृतत्वं न स्थितम् उपकारे जाते तु तेनोपकारेणोपकारान्तरमाधीयत इति कार्याजनं भवतीति चेन्न । एवं ह्युपकारपरम्परापातेऽनवस्थाप्रसङ्गादित्याह—कर्तव्यस्य चेति । तृतीयेति । प्रकारभेदेनोपकारजन्योपकारपरम्परामादायानवस्थाद्वयमिति त्रैविध्यमित्यर्थः । केवलादिति । क्षणिकदण्डसंततौ कश्चिद्दण्डो घटसमर्थो घटं जनयतीति हि क्षणिकतावादिनां मतम् । न च बहुकालं पश्यन्तोऽपि तादृशात्केवलाद् घटोत्पत्तिं पश्याम इति भावः। अतिप्रसङ्गादिति । अनुपकारकापेक्षायां दण्डः कुम्भकारमिव कुविन्दमप्यपेक्षेतेत्यर्थः । बीजपवनपाथस्तेजोभ्यः पूर्वक्षणवृत्तिभ्यः परक्षणवर्तिनः पवनपाथस्तेजोऽङ्कुरा जायन्त इति बौद्धानां मतम् । तत्र प्रत्येकं न जन्यजनकभावः किन्तु समुदायस्य समुदायं प्रति जनकता, तत्र स्वभावैक्ये कार्यैक्यप्रसङ्गः, स्वभावभेदे त्वेकस्य बीजस्य नानास्वभावत्वे नानात्वप्रसङ्ग इत्याह—तयेति । साहित्येति ।

मतः कारणस्य सहकारिविलम्बेन कार्याजनकत्वलक्षणापेक्षा नोपपद्यते सति सहकारिविलम्बस्याभावात्, क्षणिकस्य समर्थस्य सहकारिसहितस्यैव जायमानत्वात्। एवं च समर्थश्चेत्सहकारिरहितोऽपि कुर्यादित्यस्मान्प्रति न पर्यनुयोगः समर्थे सहकारिराहित्यासंभवात्। एकाकिनो जनकत्वमिति निरपेक्षत्वमपि नास्ति समर्थस्यैकाकित्वाभावात्। एवं च केवलाद्बहुतरसहस्रेणेत्यादिदूषणमपास्तम्। न चोपकारमादायानवस्था, उपकारानङ्गीकारात्। न चोपकारकापेक्षायामतिप्रसङ्गः, तद्विलम्बेन कार्यविलम्बलक्षणाया अपेक्षाया अभावात्। न च साहित्यमात्रेण सहकारित्वे तत्कालोत्पन्नानामन्येषामपि जनकत्वं स्यात् सहोत्पन्नानां समर्थानां 143.22
सहकारित्वादिति भावः। स्थिरपक्षे तु समर्थश्चेत् सहकारिभिर्विनापि कुर्यादिति दोष इत्याह—स्थिरस्त्विति।
एकस्येति। एकेनैव स्वभावेन नानाकार्यार्जनं न तु स्वभावभेदेन, येन धर्मिभेदः स्यादित्यर्थः। ननु स्थिरस्याप्यनेककार्यकारित्वमेक एव स्वभाव इति न धर्मिभेद इत्यत आह—न चेति। सामर्थ्ये कार्ये क्रमो न स्यादिति तत्र बाधकमित्यर्थः। एतेनेति। एक एव भावस्य स्वभावो विजातीयभिन्नदेशकार्यानुगुणो न तु भिन्न इत्यर्थः। अमुनानुकूलतर्केण व्यतिरेकमुखप्रवृत्तेन क्षणिकतानुमाने व्याप्तिग्रह इत्युपसंहरति—तस्मादिति। विरुद्धधर्माध्यस्तत्वेन नानात्वसिद्धौ स्थैर्यबाधिकायां न सत्त्वमस्तु क्षणिकत्वं मास्त्वित्यप्रयोजकत्वशङ्केति दर्शयति—अन्वयेनेति। पूर्वमर्थक्रियाक्रमाक्रमावक्षणे केन संभवत इति व्यतिरेकपुरस्कारेण व्याप्तिग्रहः समर्थितः, इदानीं विरुद्धधर्माध्यस्तत्वे नान्वय-

मुखेन नानात्वं प्रसाध्य व्याप्तिः समर्थ्यत इति भेदः ।
144.6-7 काल भेदेनेति। करणकाले सामर्थ्यस्याकरणकालेऽसामर्थ्यस्य सत्त्वादित्यर्थः । यद्ययं भावो वर्तमानार्थक्रियाकरणकालेऽतीतानागतयोरर्थक्रिययोः समर्थः स्याद्वर्तमानामिव ते अपि जनयेदिति प्रसङ्गेन, न जनयति च तस्मान्न समर्थ इति विपर्ययेण च, वर्तमानार्थक्रियाकरणकालेऽतीतानागतयोरर्थक्रिययोरसामर्थ्यसिद्धेर्भावेन सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्माध्यासः सिद्ध इत्याह—न चेति । प्रसङ्गेति । प्रसङ्गश्च तद्विपर्ययश्च ताभ्यां सिद्धत्वादित्यर्थः । प्रसङ्गे आपाद्यापादकयोर्व्याप्तिमाह–तथा हीति । आपादकस्वीकारं परस्याह—समर्थश्चायमिति । तव मत इति शेषः । स्वभावेति । स्वभावो भावानां सामर्थ्यलक्षणः स हेतुरापादको यत्रेत्यर्थः । अप्रयोजकतामपाकरोति—सामर्थ्यैति । विपर्यये व्याप्तिमाह—यद्यदेति । पक्षधर्मतामाह—न करोति चैष इति । व्यापकेति । व्यापकस्य न तर्क(?)आपाद्यस्य । अनुपलब्धिः अभावः । प्रसङ्गविपर्यये व्याप्य इत्यर्थः । सत्त्वमिति । साध्याप्रसिद्ध्या सहचारदर्शनादिव्याप्तिग्राहकाभावान्न व्याप्तिज्ञानं, तथा च प्रमाणाभावान्न व्याप्तिरिति व्याप्यत्वासिद्धिः । सा च हेत्वाभासेष्वसिद्धेऽन्तर्भवतीत्यस्मन्मते भवदनुमानदूषणमिति भावः । त्वन्मते त्वत्र विपक्षव्यावृत्तिः संदिग्धेति संदिग्धानैकान्तिकत्वं स चानैकान्तिकभेदः, संदिग्धनिश्चितभेदेनानैकान्तिकस्य द्वैविध्यादित्यर्थः । ननु प्रसङ्गविपर्ययाभ्यां विरुद्धधर्माध्याससिद्धौ तेन नानात्वसाधनात्कथमप्रयोजकत्वशङ्केति व्याप्तिसिद्धिरस्त्येवेत्यत आह-

न हीति । यदि समर्थः स्यात्तदा कुर्यादिति हि प्रसङ्गः, 144.19
तत्र नास्मन्मतसिद्धस्य कारणत्वस्यापादकता संभवति
व्याप्त्यनङ्गीकारात् । न हि कारणसत्ताक्षणः कार्याऽव्यवहित-
पूर्वक्षण इति व्याप्तौ प्रमाणमस्ति । कुर्वद्रूपत्वमादाय तु
प्रसङ्गः संभवति शब्दार्थपर्यालोचनया तथाभूतात्कार्यो-
त्पत्तेरावश्यकत्वात् । न च कुर्वद्रूपत्वे प्रमाणमस्तीत्यर्थः ।
कुर्वद्रूपत्वादयः शब्दाः पर्याया न त्वर्थभेदप्रतिपा-
दकाः । बौद्धैरपि तथानङ्गीकारादिति हृदयम् । तथाभूत-
मिति । कुर्वद्रूपत्वरूपे सामर्थ्ये न प्रमाणमित्यर्थः । अनु-
मानं वेति । प्रमाणान्तरं नोद्भावितं तेषां मते तदभावा-
दिति भावः । ननु निःस्वभावस्य भावस्यानङ्गीकार्यतयैव
तत्सिद्धिरत आह- सहकारिष्विति । अयमस्य स्वभावः, स
च प्रामाणिक इत्यर्थः । ननु विरुद्धमिदं कथमेकस्य स्वभाव
इत्यत आह- अविरोधादिति । कालभेदेनैकत्र न विरुद्धमित्य-
र्थः । उभयवादिसिद्धत्वादप्यस्यैव स्वभावत्वं मन्तुमुचितमि-
त्याह—उभयेति । उभयवादिसिद्धतां दर्शयति—त्वया-
पीति । कुर्वद्रूपेऽपि सहकारिणां सहकारित्वानुरोधेन करणे
परस्परं सहभावनियमोऽभ्युपगन्तव्यः । तथा चासहभावेऽकरण-
नियमोऽपि स्वीकर्तव्य एव । अग्रिमनियमाभावेऽसहभावेऽपि
करणे तैः सहैव करोतीति पूर्वनियमस्य भङ्गात्, एकनियमे द्वि-
तीयनियम आवश्यक इति भवत्सिद्धान्तात्सोभयसिद्धत्वमिति
भावः । एवं चानेन स्वभावेन सहकारिविरहदशायां करणं
नापादयितुं शक्यते, स्वभावे सहकारिविरहेऽकरणस्य प्रवेशेन

तेन स्वभावविरुद्धस्य सहकारिविरहे करणस्यापादयितुम-
शक्यत्वात्, तथा सत्यापादकस्यैवाभावापत्तेरित्याह–तथा
145.7 चेति । नन्वयं स्वभाव एव न भवतीति प्रागुक्तमिति शङ्क-
ते–नन्विति । यथान्वयनियमे सहकारिणो न जह्यादित्य-
स्मान् प्रति दोषस्तथा व्यतिरेकनियमे सहकारिणो न
स्वीकुर्यादिति त्वां प्रत्यपीत्याह—सत्यमिति । नन्व-
न्वयस्यापि स्वभावान्तर्गतत्वात्तदनुरोधेन सहकारिणः स्वी-
करिष्यति तर्हि व्यतिरेकस्यापि स्वभावान्तर्गततया
तदनुरोधेन सहकारित्यागेऽपि न दोषः, न चोभयोः
स्वभावत्वे विरोधस्तत्रापि तुल्यत्वादित्यभिप्रायेणाशङ्का-
सिद्धान्तावाह—अथेति । एवं तर्हीति । ननु सहकारिणो
न जह्यात् न स्वीकुर्यादिति तदा भावे वक्तुं शक्यते
यदि भावस्य तत्स्वीकारास्वीकारयोः सामर्थ्यं वयम-
भ्युपगच्छामः, न त्वेवं सहकारिसंनिधानयोस्तत्करण-
संनिधानासंनिधानयोस्तन्त्रत्वात् । नाप्यस्माभिः सहकारि-
विरहो भावस्य स्वभावान्तर्गत उच्यते येन सहकारिसंनिव-
धानं न स्यात् । नापि कार्यकारित्वं येन समर्थोऽपि न
कुर्यात् । एषा च व्याप्तिरस्ति—सहकार्यसमवहितो यः स
न करोति । समर्थे चैष तर्कः—यदि सहकारिरहितः स्यान्न
तदा कुर्यात्, यदि शब्दोपनिबन्धेन तर्कस्यैव प्राप्तेः, एवं च
समर्थस्य सहकारिसाहित्ये सति कारित्वमेव स्वभावोऽतो
न विरोधोऽपीति शङ्कते—स्यादेतदिति । यद्युपनिबन्धः
यदिशब्दप्रयोगः । अस्माकमपि सहकारिणां संनिधानादि न
भावनिबन्धनं किन्तु स्वकारणाधीनम् । नापि भावस्वभावे
सहकारिसाहित्यं सर्वदा फलोपधानं वा प्रविशति येन सह-

कारिविरहदशायां फलानुपधानं वा न स्यादेव । यदि च कोऽपि सहकारिविरहदशायां सहकारिसाहित्यमङ्गीकुर्यात् तं प्रति यदिशब्दप्रयोगेण तर्कः क्रियते यदि सहकारिसमवहितः स्यात्तदा कुर्यादित्याह—नन्वस्माकमपीति । 145.18
ते सहकारिणः । तदानीं सहकारिविरहदशायाम् । अस्माकं दर्शनेऽकरणदशायां धर्म्यैव न तिष्ठति क्षणिकत्वाभ्युपगमात् । भवद्दर्शने तु धर्मी तिष्ठत्येवेति स्वभावस्याप्यनुवृत्तौ तस्यामपि दशायां करणापत्तिः । अथ स्वभावो नानुवर्तते तर्हि धर्म्यपि न स्यादिति क्षणिकतायामेव पर्यवसानं निःस्वभावस्य धर्मिणोऽनवस्थितेरिति शङ्कते—स्यादेतदिति । पश्चात् अकरणदशायाम् । अस्मन्मतं क्षणिकतालक्षणम् । भवन्मतेऽपि करणदशायां व्यतिरेकगर्भः स्वभावो यद्यस्ति तदा न कुर्यात्, नास्ति चेत् तदाऽन्वयगर्भस्यापि स्वभावस्य व्यावृत्त्या निःस्वभावतया स्वरूपहानिप्रसङ्गः द्वयोः स्वभावयोरेकनिवृत्तावपरस्यापि निवृत्तिरिति भवत्सिद्धान्तादित्याह—अथेति । करणदशायां धर्मस्य व्यतिरेकमुखस्य निवृत्तावपि धर्मी न निवर्तते धर्मधर्मिणोर्भेदादित्याह—स्वरूपमिति । धर्मी तिष्ठत्येव तैर्विनाकारित्वलक्षणो धर्मस्तु नास्तीत्यर्थः । यदि धर्मनिवृत्तावपि धर्मी तिष्ठति तर्ह्यस्मन्नये प्रविष्टोऽसीति नः सिद्धान्तमाकलय्य । अकरणकाले धर्म्यस्त्येव तत्साहित्ये सति फलोपधानलक्षणो धर्मस्तु नास्तीत्याह—ममापीति । उपसंहरति—तस्मादिति । उपलक्षितमित्यनेन तयोर्न स्वरूपेऽ-

न्तर्भाव: येन सहकारिणो न जन्याद्धारयेद्धेति दूषणं स्यात् । नन्वस्य स्वरूपातिरिक्तत्वे भावरूपस्य स्वरूपं नोक्तमत
146.9 आह—स्वरूपमेवेति । भावानां स्वरूपमेवैताभ्यामुपलक्षितं कार्येण वाऽपेक्षितं न त्वन्यदित्यर्थः । कार्येणापेक्षितत्वं च स्वरूपयोग्यत्वं, सामर्थ्यमप्यस्माकं दर्शने स्वरूपयोग्यत्वं भवति तेन कारित्वमापादयितुं शक्यत इत्यभिप्रेत्याह—पदार्थ इति । फलोपहितत्वानुपहितत्वे सहकारिसाहित्यासाहित्यसापेक्षौ भावस्य धर्मौ, तौ च कालभेदेन विरुद्धावित्याह—तदेव चेति । एवं च भाव: समर्थ एव न त्वसमर्थ इति न तयोर्विरोध इति प्रदर्श्य सामर्थ्यासामर्थ्ययोरपि सत्वे कालभेदादविरोध इति दर्शयितुमाह—अथवेति । कालभेदेनाविरोधस्त्वयापि स्वीकर्तव्य इत्यर्थः । यामर्थक्रियां क्षणिको भावोऽस्मिन् काले करोति तस्याः कालान्तरेऽकरणेऽसामर्थ्यमेव प्रयोजकमिति विरुद्धधर्माध्यासेनैकस्यापि क्षणिकस्य भेदः स्यात्, यदि कालभेदेन न तयोरविरोधसमर्थनमित्याह—यदापि हीति ।

नन्वकरणे नासामर्थ्यं प्रयोजकं येन स्याद्विरुद्धधर्माध्यासप्रसङ्गः किन्त्वसत्त्वम्, एवंच कालान्तरेऽपि स समर्थ एवेति शङ्कते—असत्त्वादिति । असत्त्वं नाकरणे प्रयोजकं तथा सति सत्त्वं करणे प्रयोजकं स्यात्, न चैवम् अत्र देशे सता देशान्तरे कार्योर्जनापत्तेरित्याह—किमत्रासत्त्वेनेति । क्वचिद्देशान्तरे न कुर्यादिति पाठः । तदा सत्त्वस्य करणप्रयोजकत्वे देशान्तरेऽप्यसत्त्वान्न कुर्यात् पुञ्जात्पुञ्जोत्पत्तौ

करोति च स्वासमानदेशमपि कार्यं भाव इत्यर्थः। नकार-रहितपाठे तु यत्र देशे न करोति स उदाहार्यः, यदा विद्यमानत्वमात्रं करणे प्रयोजकं तदा विद्यमानेन देशान्तरेऽपि क्रियेतेत्यर्थः। सामर्थ्यमात्रं करणे प्रयोजकं न तु तद्देशकालसत्त्वमपीत्याह—तस्मादिति। एवंचासामर्थ्यादेव कालान्तरे क्रियां न करोतीत्याशयः। अत एव सामर्थ्येऽसतोऽपि कार्यजनकत्वं बौद्धाचार्याणां संमतमित्याह—अत एवेति। ज्ञानस्य 146.19
ज्ञानजनकतया जागराद्यज्ञानपूर्वं ज्ञानान्तरस्याभावेन विनष्टं स्वप्नज्ञानमेव चरमं जनकमित्याशयः। एवं चासामर्थ्यादेव न करोतीति मन्तव्यं, तथाच कालभेदेनाविरोधो वाच्यः। एवं चस्थिरपक्षेऽप्यस्त्वित्याह असामर्थ्यादित्यादिना स स्थिरेऽप्येवमेवास्त्वित्यन्तेन पूर्वपक्षसमाधानाभ्याम्। उक्तोत्तरत्वादिति। असामर्थ्यमसत्त्वमन्यद्वाऽस्तु समर्थस्य पश्चादसामर्थ्ये विरोधः स्यादेवेत्यर्थः। केवलसामर्थ्येऽसन्नपि कुर्यादित्याह-सामर्थ्ये इति। केवलासामर्थ्ये सन्नपि न कुर्यादित्याह-असामर्थ्ये इति। एवंच कालभेदेनैवोभयं वाच्यं क्षणिकपक्षे, तथाच स्थिरपक्षेऽप्येवमस्त्विति भावः। यद्यसत्त्वं भावातिरिक्तं तदा मास्तु विरुद्धधर्माध्यासः असत्त्वस्य भावेनासंबन्धात्, यदि तु सत्त्वमिवासत्त्वमपि भावस्वरूपं तदा विरुद्धधर्माध्यासः स्यादेव, एवं च कालभेदेनानयोरविरोधः समर्थनीयः, तथाच सामर्थ्यासामर्थ्ययोरप्येवमस्त्वित्याह-किञ्चेतिप्रभृति नैवमास्त्वित्यन्तेन। ननु सामर्थ्यासामर्थ्ययोर्विरोधं दूषणत्वेन न ब्रूमः येन कालभेदः समाधानं स्यात्, अपि तु स्वभावविपर्ययादित्याह-प्रथममिति। असौ दोषः स्वभावविपर्ययात्मा सत्त्वासत्त्वयोरपि

147.9 तुल्य इत्याह—प्रथममिति । न सत्त्वासत्त्वरूपं स्वभावद्वयं येन स्वभावविपर्ययः स्यात् किन्तु स्वदेशादौ सत्त्वमन्यदेशादौ चासत्त्वमित्येक एव स्वभाव इति शङ्कते—नायमिति । सामर्थ्यासामर्थ्यस्वरूपोऽप्येक एव स्वभाव इत्याह—ममापीति । ननु करणाकरणाभ्यां स्वभावभेदोऽस्त्वत आह—तस्मादिति । सामर्थ्यासामर्थ्ययोरेकस्वभावान्तर्गतत्वात् करणाकरणयोरपि तथात्वमिति भावः । क्षणिकपक्ष इति । अन्यदाऽसत्त्वात्कामप्यर्थक्रियामन्यदा न करोतीति क्षणिकत्वपक्षे । स्थिरपक्षे त्वन्यदापि सत्त्वात्काञ्चिदर्थक्रियां तदा करोत्यपीत्याशयः । अन्यदैव अन्यदापि । कालभेदेन कार्यभेदकरणं तु देशभेदेनेव न विरुद्धमित्याह—न चेति । उपसंहरति—तस्मादिति । विषयभेदः कार्यभेदः । स इति । घटपटादौ विरुद्धधर्माध्यासात् परस्परं भेदोऽस्तु न तु घट इत्यर्थः । एवं च दृष्टान्ताभावान्न वैशेषिकशास्त्रप्रामाण्यमिति तदुक्त्या बुद्ध्याद्यतिरिक्तात्मसिद्धिरित्याह—एवमिति । एवं चोपादानतयातिरिक्तात्मसिद्धिरिति भावः ।

ननु ज्ञानज्ञानवतोर्भेदे उपादानतया गुणातिरिक्तात्मसिद्धिः स्यात्, तदेव नास्तीत्यत आह—न चेति । धर्मत्वधर्मित्वयोरेव विरुद्धत्वादित्यर्थः । संक्षेपत इति । अयमाशयः—क्षणिकत्वसिद्धावात्मसुखयोर्भिन्नकालतया धर्मधर्मिभावाभावेन न गुणगुणिभाव इत्युपादानमात्रतयात्माभ्युपगन्तव्यः, तच्चान्यस्यैव कस्यचिदुभयसंमतस्य पूर्वकालवर्तिनः सजातीयस्य विजातीयस्य वास्तु, पूर्वहेतुभिरपि शरीरादिगुणत्वं सुखादेः प्रतिषिद्धं न तु जन्यत्वमिति बौद्धाशयः । सिद्धे च स्थैर्ये गुणगुणिभावसिद्धौ तद्गुणित्वस्य शरीरादौ प्रतिषेधेऽतिरिक्तात्मसिद्धिरिति ।

बहितीति । अगुणत्वे पदार्थान्तरकल्पना, अन्यगुणत्वे 148 6
बुद्ध्यादिगुणिनः पृथिव्यादिभिन्नस्य स्वीकारापत्तिरित्यर्थः ।
ननु तर्हि भवन्तु बुद्ध्यादयोऽप्यात्मगुणाः संयोगादयस्तु
नेत्यत आह—किञ्चेति । तेषामप्यात्मगुणत्वे विप्लवोऽस्ती-
त्यर्थः । गौरवादिति । गुरुत्वं बोधयितुमित्यर्थः । एतस्मि-
न्प्रत्यक्षसिद्धेऽप्यस्माकं तत्स्वमत्यैव प्रामाणिकत्वव्यवहार
इत्याशयः । आक्षिपतीति । समानाधिकरणयोरेव बुद्धिसु-
खयोः कार्यकारणभावादित्यर्थः । वैयधिकरण्येऽतिप्रसङ्गमा-
ह—न हीति । साक्षादपि बुद्धिः प्राप्यत इत्याह—इन्द्रि-
यान्तरेति । विहितेति । अयमाशयः—कर्मणां चिरविन-
ष्टानां कालान्तरभाविफलजनकत्वं व्यापारं विनानुपपन्न-
मिति व्यापारतयाऽदृष्टकल्पना । स च फलसमानाधिकरण
एव कल्पनीयः, अन्यगतस्यान्यत्र सुखादिजनकत्वेऽतिप्रस-
ङ्गात् । न चान्यत्र सन्नपि यो व्यापारो यज्जन्यः
स तत्र फलजनक इति नातिप्रसङ्ग इति वाच्यम् ।
ऋत्विजि प्रसङ्गात् । न हि दक्षिणार्थिनोपि ऋत्विजो न
तत्कारणम् । कर्तृत्वेनैव तैर्दक्षिणालाभादिति भावः ।
तदयमिति । अत्र देवदत्तशरीरादिः पक्षः, देवदत्तेत्याद्यो-
क्तं साध्यम्, देवदत्तविशेषगुणोपगृहीतत्वं तत्कार्यत्वलक्षणं
द्वितीयम् । तावतैवादृष्टसिद्धिः प्रथमे वैयर्थ्यात् । हेतौ मनः-
प्रभृतौ व्यभिचारवारणाय कार्यत्वे सतीति । तद्भोगाजनके
व्यभिचारभङ्गाय तद्भोगेत्यादि दृष्टान्ते ज्ञानादिना साध्य-
सिद्धिः । शरीरादेः पूर्वं ज्ञानाद्यसंभवात्पक्षधर्मताबलाददृष्ट-
सिद्धिरिति भावः । ननु पुत्रकृतेन पितृयज्ञेन पितुः फलं
पुत्रेऽदृष्टद्वारैव, क्रियायाः कर्तर्यदृष्टजनकत्वदर्शनात् । एवं पितृ-

कृतया पुत्रेष्ट्या पुत्रफलं पितृगतादृष्टद्वारैव, तथा च न कार्य-
149.6 र्थयोः फलसामानाधिकरण्यनियम इत्यत आह—पुत्रेष्टीति।
एवं च यत्र फलं तत्रादृष्टमिति नियमे न व्यभिचार इत्यर्थः।
न च क्रिया फलसमानाधिकरणाऽदृष्टजनिकेति नियमः,
अन्त्यक्रियादृष्टस्याजायमानत्वेन व्यभिचारादित्याह—अन्त्येति।
अतोऽनुभवेति। व्यापारतया संस्कारस्यावश्यकत्वे वैय-
धिकरण्येऽतिप्रसङ्गेन सामानाधिकरण्यसिद्धिरित्यर्थः।
इष्यत इति। इष्यते जिज्ञासात इत्यर्थः। ननु नानात्वे
दर्शितेऽपि विज्ञायमानयोस्तयोर्न किमपि दर्शितमित्यत
आह—तन्नान्तरीयकतयेति। तद्व्यापकतयेत्यर्थः।

संसरतीति। अशेषविशेषगुणोच्छेदस्य मोक्षस्य संसारि-
तायामसंभवेन तयोर्भेद इत्यर्थः। दृश्यतेति। संसारिणामेव
प्रत्यक्षसिद्धत्वादित्यर्थः। यन्नेति। यज्जातीयं न दृष्टं तज्जा-
तीयं न भवतीत्यर्थः। जातौ भाविघटे व्यभिचारः।
अन्धादयस्तु नाविरुद्धा इत्याह—न चेति।

ईश्वरः नारायणः। अभिमग्रन्थानुरोधात्। ईश्वरत्वस्य
स्वधर्मेण विरोधमाह—नापीति।

अवच्छेदकभेदेनैकस्यैव सुखादि न विरुद्धमिति शङ्कते—
नन्विति। भिन्नशरीरावच्छेद्ययोः सुखदुःखयोरेकात्मगतत्वे
कराद्यवच्छेद्ययोरिव प्रतिसंधानं स्यादित्याह—न ब्रूम इति।
ननु शरीरलक्षणावच्छेदकाभेदेन प्रतिसंधानमिष्टमिति शङ्कते—
अथेति। जन्मभेदेऽप्रतिसंधानं शरीरभेदेनोपपाद्यतां न तु
आत्मभेदे, तत्र संस्कारस्य नाशाद्यभावादित्याह—तत्रेति।
न च नाशादि तत्र संभवति तच्छरीरावच्छेदेनाप्यस्मरणप्रस-
ङ्गादित्याह—न चेति। अविद्याया अपि प्रतिसंधानप्रतिबन्ध-

कल्पे स एव दोष इति पूर्वपक्षसिद्धान्ताभ्यामाह—अविद्येति यच्छदत्तवदिति च । ईश्वरेऽविद्याविरहेण सर्वदुःखप्रतिसंधानं स्यादित्याह—परमेति । 

जीवा अनेके भवन्तु, अस्माभिस्तु ब्रह्मण एकत्वमभिधीयत इति कस्यचिन्मतमपाकरोति—एतेनेति । सर्वं व्यवस्था संसारित्वादिरूपा । यत इति । एवं हि व्यवस्था, तत्कृत आत्मनां भेदश्च त्वयाप्यङ्गीक्रियत एवेतीष्टापत्तिरस्माकमित्यर्थः । परब्रह्म च यदीश्वराद्भिन्नं तदा नो दर्शने नास्त्येव, यदि चेश्वर एव तदा तस्य नानात्वमस्माभिरपि नाङ्गीक्रियत इत्याह—परब्रह्मणीति । उपनिषदश्च नात्मनामेकत्वं प्रतिपादयति किन्तु स्वनिष्ठतामित्याह—मुमुक्षुवेति । संख्यानुविधानात् संख्याव्यापकत्वात् । तस्य पृथक्त्वस्य । यत्र यत्र शरीरं याति तत्र तत्र सुखाद्युपलब्धेरात्मास्तीति सिद्धम् । न च शरीरेण सह तस्यापि गत्या तदुपपद्यते, गतिरणुत्वेऽवयवित्वे वा स्यात् । न चात्माणुः अतीन्द्रियस्वरूपगुणत्वयोः प्रसङ्गात् । नाप्यवयवी, जन्यत्वापत्त्या पूर्वजन्मसंस्काराभावेन रागोत्पादकाभावे वीतरागजन्मापत्तेः । एवं च सर्वत्र स्थितया विभुत्वमित्यावेदयितु शङ्कते—विभुत्वमिति । आत्मैव चेत्सुखादिकारणं तदा तस्य नित्यतया सर्वदोत्पत्तिः स्यात् । अदृष्टमात्रापेक्षित्वे सकलात्मावच्छेदेन सुखादि स्यात्, अदृष्टात्मनोः सत्त्वात् । शरीरावच्छेदेनोत्पद्यत इति नियमान्नैवमिति चेत् । एवं संयोगस्य सिद्धिः । संयोगे सिद्धे निमित्ततया शरीरसंयोगवदसमवायितया मनःसंयोगोऽपि सिध्यति बाधकाभावात् । न

केवलमात्मगतकार्यानुरोधेन संयोगसिद्धिः, अपि तूध्वंकल-नाद्यनुरोधेनापीत्याह—सहकार्यन्तरेत्यादिना । आश्रयेति । सत्याश्रये विभागस्यैव तद्विनाशकत्वादित्यर्थः ।

इत्यात्मनिरूपणम् ।

152.14 तदिति । यदि तावदेव कारणं स्यात्तदा तस्मिन् सति कदाचिद्भवति कदाचिन्न भवतीति न स्यात्, एवं चातिरिक्तमपेक्षणीयं, तदेव च मन इत्यर्थः । सत्यपि चेति । अतिरिक्तानपेक्षायां यदेन्द्रियादिसमवधानकाले न जायेतेत्यर्थः । नन्विन्द्रियादिसमवधानकाले भवत्येवेत्यत आह—व्यासङ्ग इति । एतत् अभवनम् । यदीन्द्रियादिसमवधानकाले स्यादेव तदा व्यासङ्गो न स्यादित्यर्थः । ननु यद्यणुमनःसापेक्षमिन्द्रियं जनकं तदा क्वचिदनुभूयमानं यौगपद्यं नोपपद्येतेत्यत आह—तथा चेति । भ्रान्तिरसावित्यर्थः । दृष्टसकलकारणसंपत्तौ नाऽदृष्टविलम्बेन विलम्बस्तेन विना दृष्टसकलसंपत्तेरेव वक्तुमशक्यत्वादिति पूर्वपक्षपुरस्सरमाह—अदृष्टमित्यादिना । स्मृतिरिति । द्रव्यसाध्येत्युक्तावात्मना सिद्धसाधनमित्यात्मसंयुक्तेति । तथापि शरीरेण तदिति शरीरावच्छिन्नत्वं द्रव्यविशेषणम् । न च शरीरं शरीरावच्छिन्नमिति भावः । हेतौ ईश्वरज्ञानादौ व्यभिचारवारणाय सत्यन्तम् । रूपादौ विशेष्यभागः । दृष्टान्ते चक्षुरादि तथा । अनुकूलं तर्कमाह—अन्यथेति । आत्मनो योगस्यैवासमवायिकारणत्वादित्यर्थः । शब्दाद्यज्ञानात् श्रोत्राद्यव्यापारो ज्ञातव्य इत्याह—विपर्येति । साक्षात्कारत्वात् जन्यसाक्षात्कारत्वात् । यदीति । चक्षुर्ग्राह्यत्वेऽन्धेन न गृह्येत । एवमिन्द्रियान्तरेऽपि बोध्यम् । ननु रूपादिबुद्धिरेव सुखा-

दिस्वरूपा सा स्वसंवेद्येति किमिति ग्राहकत्वेन मनःस्वीकार इत्यत आह—सुखादीनामिति । एवमिति । पूर्वोक्त- 154.2
प्रकारेण मनःसिद्धौ वक्ष्यमाणयुक्त्या नानात्वे सिद्धेऽनुगत-बुद्धिलक्षणनियतकार्येण जातिसिद्धिरित्यर्थः । कार्यं च नियतत्वं प्रकारान्तरेणानुपपन्नत्वम् । अभिप्रायवानिति । गुण उक्ते संख्यायां निरुक्तायां तद्विशेषनानात्वसाधनं, तथाच मनस्त्वसिद्धिरिति भावः । तथापीति । विशेषबोधनार्थं तदिति, न वैयर्थ्यमिति भावः । अन्यथेति । न ह्यणुत्वेऽनेकशरीरे युगपद्वृत्तिः संभवतीत्यर्थः । तद्दूरमिति । लाघवादित्यर्थः । यथा ज्ञानयौगपद्यभिया वैभवं त्यज्यते तथैकशरीरे नानात्वमपीत्याह—एकैकस्मिन्निति । विभुत्वे हि सर्वेन्द्रियमनःसंबन्धे युगपज्ज्ञानवदनेकत्वेऽपि स्यादित्यर्थः । विभुत्वे मनःसंयोगलक्षणकारणविलम्बाभावाद्विषयसंनिकृष्टेष्विन्द्रियेषु युगपज्ज्ञानं स्यादित्याह — वैभवे हीति । एतेनेति । अणुत्वस्य व्यासङ्गसिद्धत्वेन मनो विभु सर्वदा स्पर्शरहितत्वात् नित्येन्द्रियत्वात् इत्यादयो बाधिता इत्यर्थः । तत्तृणामिति । सर्वावच्छेदेनाव्यवहितपूर्वकाले प्रयत्न उत्पन्नस्ततः सर्वत्र चेष्टाः । यदि वा मनोऽन्तरैस्तदाऽदृष्टाकृष्टैस्तदवच्छेदेन यत्न उत्पद्यत इत्यर्थः । तथा च तदवच्छेदेन मन.संयोगाभावात्कथं प्रयत्नः, तदभावे च चेष्टा न संभवतीति दूषणमलग्नकमिति हृदयम् । कार्यान्तरसंयोगाः कार्यान्तरं ज्ञानादि तस्मै आत्मसंयोगा इत्यर्थः । न हि पूर्वशरीरत्यागादन्यजन्मरणं परपरिग्रहाच्चान्यज्जन्मेत्याह—अन्यथेति ।

156.2 न हीति । चार्वाकैरेव परं तथाऽभ्युपगमादित्यर्थः । नापीति । कारकस्य कर्मणः सत्त्वाद्योगसिद्धिरित्यर्थः ।

मूर्तत्वेन न द्रव्यारम्भकताऽप्रयोजकत्वात्, स्पर्शराहित्यं तु द्रव्यानारम्भकत्वे प्रयोजकं परमाणोः स्पर्शवत्त्वाद् द्रव्यारम्भकत्वनियमश्च, अन्यथा कार्ये स्पर्शाभावेन तत्र स्पर्शाऽनुमानासंभवेन घटादाविव प्रत्यक्षाभावेनाप्रामाणिकत्वप्रसङ्ग इत्याह — न हीति । ननु तर्हि द्रव्यारम्भकत्वे किमनुगतं व्याप्यमत आह — स्पर्शवत्त्वमिति । अन्यथावयविभिन्नत्वे सति स्पर्शवत्त्वमित्यर्थः । स्पर्शवान् परमाणुस्तत्कथं द्रव्यारम्भक इत्याह — द्रव्येति । परमाणुस्पर्शे कार्यस्पर्शस्यैव प्रमाणत्वादित्यर्थः । एवं च परमाणूनां द्रव्यारम्भकतायां न मूर्तत्वं प्रयोजकं किन्तु स्पर्शवत्त्वमिति निःस्पर्शं मनो नारम्भकमित्याशयः । परमाणूनामारम्भकत्वे स्पर्शवत्त्वमवच्छेदकप्रविष्टं, निःस्पर्शस्यापि परमाणोः सत्त्वात्, न तु द्व्यणुकादेरपीति ध्येयम् । किञ्च, परमाणुस्पर्शः कार्यस्य द्वारेणोपभोग्य इति तदभावे तदपि न स्यादित्याह — अनुपभोग्यत्वेति । ननु प्रत्यक्षमेव विषयतया स्वकारणं परमाणुस्पर्शं व्यवस्थापयिष्यतीत्यत आह — तदीयेति । मनः स्पर्शवत् मूर्तत्वादित्यत्राप्रयोजकतामाह — मूर्तत्वस्येति । मनोऽमूर्तमस्पर्शत्वादित्यत्राह – विभवेति । अमूर्तत्वेऽपि हि परममहत्त्वं स्यात्, तथा चाविभुत्वं न स्यात्, तच्च स्थापितमित्ययमपि प्रति-

यस्तर्कदुस्तरतरार्णवकर्णधारो

वेदान्तवर्त्मनिरताध्वगसार्थवाहः ।

श्रीपद्मनाभरचितेन दिवाकरेण

तुष्टोऽमुनास्तु स कृती बलभद्रमिश्रः ॥

इति मनोनिरूपणम् ।

इति श्रीजगद्गुरुमिश्रश्रीबलभद्रात्मजविजयश्रीग-
र्भसंभवविश्वनाथानुजसकलशास्त्रारविन्दप्र-
द्योतनभट्टाचार्यमिश्रश्रीपद्मनाभकृतः
किरणावलीभास्करः संपूर्णः ।



# INDEX

## ( DESCRIPTIVE AND NOMINAL )


अदृष्ट

Its function is co-ordination of known, *i. e.* ascertained, causes ( दृष्टफलकारणसम्पादन ), p. 180.

अनुपप्लव ( refering to आलयविज्ञान ), p. 15.

अनुस्मृति, p. 154.

अन्त्यावयवी ( *i. e.* शरीर ), p. 83

अन्धकार, s. v. तमस् ।

अन्धतमस, pp. 35, 40.

अपवर्ग, s. v. निःश्रेयस ।

अभिधेय ( of the Vaiśeshika S'āstra ), stated to be *dravya*, &c. (*i. e.* the Categories recognised). The relation between the S'āstra and the Categories is declared as प्रतिपाद्यप्रतिपादकभाव, p. 23.

अभ्युदय ( 'right knowledge', 'तत्त्वज्ञान' ), p. 22.

अभ्युपगमसिद्धान्त, p. 13.

अयोनिज ( शरीर ), described as threefold—*viz* ( 1 ) of the devas, ( 2 ) of the hell-beings and ( 3 ) of the infusoria, pp. 84-85 ; s. v. योनिज ।

अवतमस, p. 40.

अवाक् ( = वाम ), p. 151.

उदीची ( दिक् ), defined, p. 151.

एव, different meanings stated:

( *a* ) अत्यन्तायोगव्यवच्छेद, *e. g.* नीलं सरोजं भवत्येव ।

In this sense the word is construed with the *kriyá* ( क्रियासङ्गतिः ), p. 25.

( *b* ) अयोगव्यवच्छेद, *e. g.* शङ्खः पाण्डर एव । In this sense the word is related to the *Viśeshaṇa* ( विशेषणसङ्गतिः ), p. 25.

( *c* ) अन्ययोगव्यवच्छेद, *e. g.* पार्थ एव धनुर्धरः । As thus understood the word is related to *Viśeshya* ( विशेष्यसङ्गतिः ), p. 25.

क्त्वा, meaning stated, according to

( *a* ) the old school of Naiyáyikas—अव्यवहितपूर्वकालत्व ;

( *b* ) the late school—पूर्वकालत्व ;

( *c* ) the author of Chintàmaṇi—आनन्तर्य ;

( *d* ) the Mímánsakas—समानकर्तृकत्व ; and

( *e* ) the Grammarians—समानकर्तृकत्वे सति पूर्वकालत्व, p. 7.

क्षणिकतावाद ( of the Buddhists ), stated and refuted, pp. 163-176.

छाया, pp. 35-37, 40 ; distingnished from तमः, p. 40.

ज्ञानवासना ( = 'भावना' ), p. 114.

धर्म ( = 'निवृत्ति' ), identified with yoga and described as originating from निर्दिष्टासन rather than from निष्काम कर्म, p. 20.

नाड़ी ( मनोवहा and रसादिवहा ), objects of touch sensation, p. 158.

निःश्रेयस

Udayana observes in the Kiraṇávalí that all the systems of philosophy agree in holding that Final Beatitude consists in absolute cessation of pain. But they differ in describing the nature of this state and the process of its realisation.

The different views are :

i. *Of one School of Buddhists (viz. Śúnyavádins or Mádhyamikas)*: कण्टकादयो दुःखहेतुतया निवर्त्यन्ते तन्निवृत्तिरेव मोक्षः. p. 14.

Udayana replies to this saying that ( *a* ) if the Self were by nature transitory there is no use making an effort to destroy it, for it will cease to exist of itself ; and that ( *b* ) if, on the contrary, it is eternal it is impossible to destroy it. In any case the doctrine of *Nairátmyaváda* stands self-condemned.

ii. *Of another school of Buddhists ( viz. Vijñánavádins or Yogácharins )* : घटोऽयमित्याकारं ज्ञानं धारयाऽनन्तं मोक्षः, p. 15.

Udayana notes that this definition of apavarga makes it practically identical with absence of pain, but he points out that the series of ālayavijñāna ( *i. e.* चित्तसन्तति ) cannot be held as ' infinite', since the ālaya ( chitta ) according to Buddhist Idealists is the product of body, so that as soon as the body falls off the chitta also vanishes with it. The apavarga being admittedly a bodiless state it is idle to assume in it the continuity of the chitta.

iii *Of Ekadaṇḍin Vedántins*: वस्तुतो ब्रह्माद्वैतसाक्षात्कारादविद्यानिवृत्तौ विज्ञानसुखात्मकः केवल आत्माऽपवर्गे वर्त्तते ( Prakāśa, p. 48 ).

iv *Of Tridaṇḍin Vedántins* : आनन्दमयपरमात्मनि जीवात्मलयो मुक्तिः ( Prakāsa, p. 49 ).

v. *Of one school of Mímánsakas ( viz. Tautátitas )*: नित्यस्य सुखस्याभिव्यक्तिर्मुक्तिः, p. 16.

Udayana says that this view is in direct antithesis

to the spirit of Tautatitas' own philosophy as expressed in their attitude towards the Naiyāyika's assumption of Eternity of Divine Knowledge. It is a contradiction to deny the eternity of one specific quality of the self, *viz.* Knowledge and admit it in the case of another, *viz.* Pleasure, the condition of bodilessness being common to both.

vi. *Of another school of Mímánsakas ( viz. Prábhákaras )*:

आत्यन्तिकदुःखप्रागभावो मोक्षः ( Prakāśa, p. 50 ).

vii. *of Sáṅkhya* :

This view is vitiated by the belief that pain pertains to Prakriti (i. e. महत्) and not to Purusha.

viii. *Of some philosophers (evidently Tantrists)* : पारतन्त्र्यं बन्धः, स्वातन्त्र्यं च मुक्तिः ( Kiraṇāvalī, Ben. Ed., p. 8 ).

Udayana remarks in objection that स्वातन्त्र्य in itself does not constitute a thing to be striven after, the End of our Life, unless it is accompanied by absence of pain and of its causes. If it means only ऐश्वर्य which results from sādhanā and is perishble, it can hardly be called a Purushārtha.

ix. *Of Naiyáyikas* : अनिष्टनिवृत्तिरात्यन्तिकी निःश्रेयसम् (Kiraṇāvalī, Ben. Ed., p. 8).

x. *Of Vaiśeshikas ( author's own view )* : ( आत्मनः ) अशेषविशेषगुणोच्छेदो मोक्षः ।

निरवयव, declared to be either infinitely small, atomic ( परमाणु ), or infinitely great ( परममहत् ), p. 90.

निदिध्यासन, explained as श्रुतस्यार्थस्य नैरन्तर्येण दीर्घकालमनुसन्धानम्, p. 21.

निबन्ध, pp. 6-7.

न्याय—

The following Nyāyas are mentioned in the Bhāskara :

1. द्वौ नञाविति न्यायात्, p. 8.
2. स्वयं सत् किञ्चित् ज्ञापयतीति न्यायात्, p. 9. cf. p. 76.
3. शाब्दी आकाङ्क्षा शब्देनैव पूर्यत इति न्यायात्, p. 10. cf Jacob's Laukika Nyāyāñjali, Part III, p 86.
4. शब्दाधिक्यादर्थाधिक्यमिति न्यायः, p. 83.
5 गोबलीवर्दन्यायः, p. 160. cf Jacob, I, p. 25 ; III Sup., p. 133.

पृथिवी, section on, pp. 67-93.

प्रकरण, meaning stated :

( a ) Padmanābha interprets the term in the sense of book in general-ग्रन्थमात्रस्य प्रकरणपदेनाभिधानात्, p. 12.

( b ) But Vardhamāna restricts its use to the sense of 'a book to be commented upon'. See Prakāśa, p. 34.

प्रकरणशुद्धि, p. 12.

प्रगल्भ भट्टाचार्य, his view on तमः quoted, p. 40.

प्रचय, meaning stated :

( a ) = 'प्रचारः', p. 7 ;

( b ) = 'विप्रसमसंख्यत्वम्', p. 8 ;

( c ) = 'द्रव्यारम्भकसंयोगः', p. 113. In this sense the word stands for the contact between atoms which results in the production of a substance.

प्रतीची, defined, p. 150.

प्रतीप, p. 151.

प्रवृत्ति ( = 'वस्त्वन्तराभिमुखक्रिया' ), p. 156.

प्रवृत्तिविज्ञान, p. 15.

भाची, defined, p. 150.

बलभद्रमिश्र, ( father of the author ), p. 184.

बलभद्री, referred to, p. 28.

भक्ति. defined ( 'आराध्यत्वेन ज्ञानं') and distinguished from श्रद्धा ( s. v. ), p. 7. This definition of *bhakti* is criticised by Svapnes'vara in his commentary on Sāṇdilya sútras ( 1. 1. 2 ) on the ground that it is too wide, since it does not exclude पूजा, नमस्कार, etc which are evidently *not* cases of *bhakti*.

भोग, defined ( 'स्वसमवेतसुखदुःखसाक्षात्कारः' ), p. 83.

मनः, section on, pp. 180-184.

मन: its function not restricted to any particular kind of object: मनस्तु न प्रतिनियतमिन्द्रियं सर्वग्राहकत्वात्, p. 102; its motion explained as due to a complex psycho-physical process initiated by conscious will, p. 158; its omnipresence rejected and grounds stated, p. 181; its multiplicity in one body rejected, p. 18; vega in it accounted for, p. 182.

मनस्त्व, reasons for assumption of this as a játi stated, p. 181.

मनोवहा नाडी, p. 158.

मरण, defined as पूर्वशरीरत्यागः, p. 181.

मूर्त, The usual rule that two मूर्त objects cannot occupy one and the same space ( समानदेशताविरोधः; cf p. 36 अनभिभूतं मूर्त्तं द्रव्यं नैकत्र तिष्ठति ) may be accepted as valid in such cases only where मूर्त्तत्व is co-existent with निविडत्व । It is for this reason, so our author argues, that a jar held beneath water is visible, p. 110.

मोक्ष, s. v. निःश्रेयस ।

मोक्ष, process of its manifestation :

( i ) निष्काम कर्म,

( ii ) सत्त्वशुद्धि, consisting in elimination ( तिरोधान ) of adharma which is the प्रतिबन्धक ।

( iii ) तत्त्वज्ञान, rising by itself on the accomplishment of ( ii ).

( iv ) Destruction of मिथ्याज्ञान ; this is only a *modus operandi.*

v. मोक्ष

Hence it appears that तत्त्वज्ञान is the immediate ( साक्षात् ) antecedent to moksha, while कर्म is so by mediation ( परम्परया ). तत्त्वज्ञान is held as destructive of मिथ्याज्ञान by means of adrishṭa. P. 21.

मोक्ष:

The Mímánsaka view viz. ज्ञानकर्मसमुच्चयवाद [ ज्ञानकर्मणोर्द्वयोरपि समतया ( मोक्ष ) जनकत्वम्] rejected, p. 21.

योनिज (शरीर), explained as a body originating from the union of शुक्र and शोणित, p. 84.

वर्द्धमानेन्दु, referred to, p. 28.

वासना, p. 17, declared to be twofold, viz कर्मवासना (s. v.) and ज्ञानवासना (s. v.), p. 114.

विघटन, explained ( ईषद् विभाग : ), p. 157.

विनिगमना (एकार्थनिश्चय:), p. 38.

विश्लेष ( सर्वात्मना विभाग : ), p. 157.

शरीर, defined as—स ( भोग: ) यदवच्छिन्न आत्मनि तदन्त्यावयवि शरीरम्, p. 83 ; divided into two kinds—viz योनिज and अयोनिज (s. v ), p. 84 ; described as subject to constant change, so that the body of childhood is distinct from that of youth. The difference of

quantity (परिमाण), according to Vaiśeshika notion, presupposes a diffierence of substance. The apparent continuity or identity of body is therefore an illusion, p 162.

शास्त्रपाठ, its importance pointed out :

(*a*) It supplies the grounds (reasons, उपपत्तय:) which are calculated to give rise to discrimination (विवेक), without which mere recitation of the scriptural texts ( श्रवण ), however repeated, is incapable of producing certitude. It is through *viveka* alone that the taint of scepticism ( अश्रद्धामल ), can be successfully removed from the mind. P. 21.

(*b*) Further, the study of Śástra makes it possible to ascertain the meaning of the śruti on which *Sannyása* and *nididhyásana* may follow as matters of course p. 21.

शुश्रूषा (सेवा), p. 10.

श्रद्धा (वैदिकार्थनिश्चय:), p. 7. ( s. v. भक्ति ).

श्रुति ('शब्द'), p. 10.

# ERRATA.

| Page & line. | Read. | For. |
|---|---|---|
| १० १९ | शिष्य | शिष्य |
| १३ २४ | अभ्युपगम | अभ्युपपम |
| १५ २ | (मि) थ्याज्ञानं | (मि) थ्याज्ञानां |
| १९ १२ | अद्यावच्छु० | अद्याववाच्छु० |
| २१ २ | ० मित्यस्याशे० | मित्यास्यासे० |
| ,, ८ | ० देवोत्पादेन | ० देवात्पादेन |
| ,, १५ | परस्पर- ० | परस्पर ० |
| ,, १९ | व्यापारान्तरापेक्षा | व्यापारन्तरापेक्षा |
| २६ २५ | व्यक्त्याद्युपलम्भ ० | व्यक्त्याद्यपलम्भ |
| ३२ २४ | नीलं तम | नीलं मत |
| ३६ २५ | येति | यति |
| ,, ,, | छायया ० | छा या० |
| ३७ १२ | भ्रम | भ्रभ |
| ,, २५ | जातीये, | जातीये |
| ३८ २१ | नालोका-० | नालोका० |
| ३९ २१ | रजतत्व- ० | रजतत्व० |
| ४५ १७ | असामान्य-० | असामान्य० |
| ५९ ६ | दण्डा-० | दण्ड-० |
| ६३ १५ | अपकृष्ट० | अपकृष्ट० |
| ,, १७ | ,, | ,, |
| ६४ १६ | संयोगा० | संयोगां० |
| ७४ ११ | वासस्मि | वासस्मि |
| १०२ ४ | ० देवानुपलम्भो | ० देयनुपलम्भो |
| १०४ ९ | नखादीनां | नखादीना: |

| Page & line. | Read. | For. |
|---|---|---|
| ११० १० | सर्वसंमत० | सर्वसमत० |
| १५३ १७ | शङ्कते— | शङ्क[illegible] |
| ,, १८ | प्रवृत्तिर्न | प्रवृत्तिर्न । |
| १५४ २४ | ज्ञानाश्रयो | ज्ञिनाश्रयो |
| ,, २५ | ० धिष्ठितेन | ० घाष्ठितेन |
| १५५ ५ | एवं | एव |
| १५६ २१ | पूर्ववर्त्तित्वं | पूर्ववर्तित्व |
| १५९ ४ | पृथग् | पृथग |
| १६० ४ | ० दित्युक्तम् | ० दित्यक्तम् |
| १६१ ३ | सामानाधिकरण्यस्य | सामाना।धिकरणयस्य |
| १६३ २२ | नत्वेन | नात्वेन |
| १७५ २२ | ० त्यन्तेन | ० त्यन्तने |
| १८४ ८ | ० पद्मनाभ ० | ० पद्मनाभ ० |